प्रिया प्रकरवा(नि) च ताभि वचनानि    दयिताजीवितं तस्य



...ति राजराजस्य धनदस्य अनुचरो गुह्यकश्चिरं कालं दध्यौ चिंतयामास किं कृत्वा तस्य मेघस्य पुरो ऽग्रतः स्थित्वा कथमपि महता कष्टेन बाष्पमुत्साय यत्नेन तस्थौ कीदृश
...स्य केतकानां केतकी कुसुमानामाधानं निष्पत्तिः तत्र हेतुस्तस्य कौतुकाधानहेतोरभिलाषीत्यर्थः कारणं स्यात्कौतुकं चाभिलाषे स्यादुत्सवेऽपि च हर्षयोरिति विश्वः
...गम्भौ नृपेचेद्र्क्षन्नियां सक्तयोरिति विश्वः कीदृशो यक्षः अंतर्बाष्पः अंतर्मध्ये बाष्पो नेत्रांबु यस्य सशोक जलपूरितकंठ इत्यर्थः स्तंभितास्रुरिति युक्तोयमर्थः यतो मे
घालोके मेघदर्शने सुखिनोपि प्रियादिसुषासंगमवतोपि मनुजस्य चेतश्चित्तं अन्यथावृत्ति भवति विकृतिमापद्यते इति महत्त्व कंठाश्लेषप्रणयिनि जने दूरसंस्थे विदेशस्थे किं भूते जने कंठाश्ले
षप्रणायनि कंठालिंगार्थिनि दूरसंस्थास्थितिर्यस्य तस्मिन् सति मद्भार्यायाः मनः कथं तस्मादित्युचितं संदेशदानमिति भावः २ प्रत्यासन्ने इति सयुक्तस्तस्मै मेघाय स्वा
...तं गाजहार कीदृशः प्रीतिसंतुष्टः कीदृशं स्वागतं प्रीतिप्रमुखवचनानि यस्मिन् कर्मणि यथा स्यात्तथा कस्मिन् नभसि श्रावणे प्रत्यासन्ने सति निक...

तस्य स्थित्वा कथमपि पुरः कौतुकाधानहेतोरंतर्बाष्पश्चिरमनुचरो राजराजस्य दध्यौ मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः
कंठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे २ प्रत्यासन्ने नभसि दयिताजीविताऽलंबनार्थी जीमूतेन स्वकुशलमयीं हारयिष्यन्प्रवृ
त्तिं सप्रत्यग्रैः कुटजकुसुमैः कल्पितार्घाय तस्मै प्रीतः प्रीतिप्रमुखवचनं स्वागतं व्याजहार ३ धूमज्योतिःसलिलमरुतां सन्निपातः
क्व मेघः संदेशार्थाः क्व पटुकरणैः प्राणिभिः प्रापणीयाः ॥ ...ताजीवितस्य आलंबनं दयिताजीवितालंबनं तदर्थयतः किं करिष्यन् जीमूतेन जलदे
न सह स्वकुशलमयीं निजक्षेमप्रधानां प्रवृत्तिं हारयिष्यन् किं भूताय तस्मै प्रत्यग्रैर्नवीनैः कुटजकुसुमैर्गिरिमल्लिकाभिः कुटजो गिरिमल्लिका इति हलायुधः कल्पि
तोऽनुष्ठितोऽर्घः पूजाविमत्प्रयोजनसिद्धिरनेन सिद्धिः भविष्यतीति हर्षितः ३ धियस्मै सः तस्मै मूले पूजाविधावर्थः इत्यमरः शोभनमागतं कुशलागमनं पप्रच्छेत्यर्थः
४ धूमेति गुह्यको यक्षस्तं मेघं ययाचे प्रार्थयामास यक्षः किं कुर्वन् इत्यौत्सुक्यात् अपरिगणयन् अविचारयन् उत्कंठापर्याकुलत्वात् इतीति किं क्वासौ मेघः क्व
च संदेशार्थाः कीदृशो मेघः धूमश्च ज्योतिश्च सलिलं च मरुच्च धूमज्योतिःसलिलमरुतः तेषां सन्निपातः समवायो मिलापकः कीदृशाः संदेशार्थाः प्राणिभिश्चे...

रवनेः
कर्तनाय
कंठस्य ...
...
नः प्रापणी
वेधनेय
स्यस्रः-१

मे॰ का॰ टी॰ म॰ २

प्रार्थनीयाः प्रापयितव्याः कीदृशैः प्राणिभिः प्रकृतिप्रकटानीन्द्रियाणि येषां तैः ह्रियतः कामार्त्ताः पुरुषाः प्रकृतिकृपणाश्चेतनाचेतनेषु विवेकमूढा भवंति प्राणीनु चेत नो जन्मीत्यमरः ५ जातमिति हे मेघ त्वां पुष्करावर्त्तकानां वंशे जातं उत्पन्नं जानामि कीदृशे वंशे भुवनविदिते भुवनप्रसिद्धे महाकुलप्रसूतमिति कीदृशं त्वं मघोनः शक्रस्य प्रकृतिपुरुषं प्रधानपुरुषं पुनः कीदृशं कामरूपं इच्छाधीनविग्रहं दुर्गादिसंचारमित्यर्थः हे पयोद तेन कारणेनाहं त्वयि विषये अर्थित्वं याञ्चाभावं गतः प्राप्तः कस्मात् विधिवशात् दैवायत्तात् भाग्यवशादित्यर्थः कीदृशोऽहं दूरबंधुः दूरे बंधुर्यस्य स विप्रयुक्तभार्योऽहं त्वयि याचकत्वं प्राप्तः अधिगुणे जात्यादिउत्कृष्टे पुंसि याञ्चा मोघा विफलापि वरं भाषितमिथं गुणेन अधमे पुरुषे निर्गुणे याञ्चा लब्धकामापि सफला अभिलाषापि वरं ईषत्प्रियमपि न भवतीत्यर्थः देवाद्वृते वरः श्रेष्ठे त्रिषु पुक्लीवं मनाक्प्रियमित्यमरः अतस्त्वमधिकगुणोसि त्वां प्रार्थये इति भावः ६ संतप्तानामिति तत्कारणात् हे पयोद मे मम प्रियायाः संदेसं हर प्रापय यतोऽसि त्वं

इत्यौत्सुक्यादपरिगणयन्गुह्यकस्तं ययाचे कामार्त्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु ५ जातं वंशे भुवनविदिते पुष्करावर्त्तकानां
जानामि त्वां प्रकृतिपुरुषं कामरूपं मघोनः तेनार्थित्वं त्वयि विधिवशाद्दूरबंधुर्गतोहं याञ्चा मोघा वरमधिगुणे नाधमे लब्धका
मा ६ संतप्तानां त्वमसि शरणं तत्पयोद प्रियायाः संदेशं मे हर धनपतिक्रोधविश्लेषितस्य गंतव्या ते वसतिरलका नाम यक्षेश्वराणां
बाह्योद्यानस्थितहरशिरश्चंद्रिकाधौतहर्म्या ७ त्वामारूढं पवनपदवीमुद्गृहीतालकांताः प्रेक्षिष्यंते पथिकवनिताः [illegible] आश्वसंत्यः

संतप्तानां ग्रीष्मोष्मतापितानां शरणं वर्त्तसे अतो हमपि विरहतप्तः संदेसं प्रापयेत्यर्थः कीदृशस्य मे मम धनपतिक्रोधेन धनपतेर्धनदस्य क्रोधेन वियोजितस्य हे घनाघन त्वया यक्षेश्वराणां वसतिर्गंतव्या यातव्या बहुवचनं पूज्यत्वात् यक्षेश्वरस्येत्यर्थः किंनाम वसतिः अलकानाम राजधानी कीदृशी बाह्योद्याने बहिरुपवने सकलजनप्रत्यक्षस्थितो योसौ हरो महादेवः तस्य शिरश्चंद्रिकाज्योत्स्ना तया धौतानि निरस्ततमोमलानि हर्म्याणि धनिजनसदनानि यस्यां सा इति ईश्वरदर्शनलाभो दर्शितः ७ त्वामिति हे जलद त्वां प्रति पथिकवनिताः प्रेक्षिष्यंते बहुमानपुरस्सरमवलोकयंतीत्यर्थः कीदृशं त्वां पवनपदवीमाकाशमारूढं कीदृश्यः पथिकयः उद्गृहीतालकांता उद्गृहीतं चूर्णकुंतलं याभिस्ताः पुनः कीदृश्यः प्रत्ययान्निश्चयात् ज्ञानाद्वा आश्वसंत्यः

रम २

मे॰ १

स्वस्थीभवंत्यः अवश्यं घनागमेपतिरेष्यतीतिविमृश्यप्रत्ययः शपथेज्ञानेनिश्चये इतिविश्वः युक्तोयमर्थः त्वयिसंनद्धेगृहीतसौदामिनीपुरंदरचापादिसामग्र्यं
केसतिजायांप्रेयसीकः उपेक्षेत अवधारयेत् अहमिवान्योजनः पराधीनवृत्तिः परायत्तव्यापारोनस्यात्मेवत् अन्योपिदैवतंत्रेभवतिसर्वोपेक्षतेस्वतंत्रस्तु
नैवेतिभावः मंदं २ मितिः हेमेघत्वांपवनोवातोमंदंशनैः २ नुदतिप्रेरयतियथायेनप्रकारेण कीदृशः पवनोनुकूलः पृष्ठानुपातीमृदुगतिश्चानुकूलउच्यतेचपु
नर्नकेवलंवायुर्नुदतिकिंतुतेतवचातकोवामोवामभागस्थितोनदतिशब्दंकरोतिमधुरं शुभस्वरंयथास्यात्तथाकीदृशः चातकः तोयगृध्नुः जलाभिलाषुकः सग
र्वः इत्यपिपाठः सगर्वः सोत्साहः गर्वः उत्साहमात्रयोरितिविश्वः तथानूनंनिश्चितंबलाबलेनश्रकंकुटिलंगच्छतीतिबलाकाधिसकंटिकाः खेआकाशेभवंतंत्वं
सेविष्यंते भजिष्यंतेकीदृश्यः आबद्धमालारचितपंक्तयः अन्याअपिवनितारचितपुष्पादिमालामंडिताः सत्यः कांतमभिसरंति इति कीदृशंनयनसुभगं लो



कःसन्नद्धेविरहविधुरांत्वय्युपेक्षेतजायांनस्यादन्योप्यहमिवजनोयःपराधीनवृत्तिः ८ मंदंमंदंनुदतिपवनश्चानुकूलोय
थात्वांवामश्चायंनदतिमधुरंचातकस्तेसगर्वः गर्भाधानक्षणपरिचयान्नूनमाबद्धमालाःसेविष्यंतेनयनसुभगंखेभवंतंब
लाकाः ९ तांचावश्यंदिवसगणनातत्परामेकपत्नीमव्यापन्नामविहतगतिर्द्रक्ष्यसिभ्रातृजायां आशाबंधः कुसुम
सदृशंप्रायशोह्यंगनानांसद्यःपातिप्रणयिहृदयंविप्रयोगेरुणद्धि १० ॥ चनाभिरामंकस्मात् गर्भाधानक्षणः गर्भस्याधानंनि

ष्पत्तिस्तदेवक्षणः उत्सवस्तेनपरिचयः संस्तवस्तस्मात् घनागमेहिबलाकानांगर्भाधानंभवतिगर्भाधानंनारीणांमहानुत्सवः गर्भः कुक्षिस्थोजंतु
राधानमुत्पादनंतदेवक्षणः उत्सवस्तस्मिन्परिचयस्तस्मात् ९ तामिति हेमेघत्वंपुनस्तत्रालकायांत्वंभ्रातृजायांआवश्यंद्रक्ष्यसिममहिलां
विलोकयिष्यसिकीदृशींभ्रातृजायांदिवसगणनायांतत्परांतांपुनःकीदृशींएकपत्नींपतिव्रतांपुनःकीदृशींअव्यापन्नांजीवंतींकीदृशस्त्वंअविहतगतिः
अविच्छिन्नगमनः आशाबंधोभिमतार्थःप्राप्तिःहियतः अंगनानांहृदयंविप्रयोगेप्रायशोरुणद्धिविदारणंनिवारयतिकीदृशंहृदयंसद्यःपातितत्काल
मेवपतनशीलंपुनः कीदृशंप्रणयस्नेहोविद्यतेयस्मिन् तत्प्रणयिपुनःकीदृशंहृदयंकुसुमसदृशंसुकुमारं १० ॥

कर्तुमितिहेमेघराजहंसाः भवंतस्तवसहाया संपत्स्यंते नभसि आकाशे कीदृशाः राजहंसाः विसामृणालतंतवः किसलयानवपल्लवास्तेषां छेदाः खंडानितएव
पाथेयं संबलं विद्यते येषां ते तया कियन्मार्गसहाया भविष्यंतीत्याह आकैलाशपर्यंतं यावत्स्यार्थः किंकृत्वा तेनवतद्गर्जितं श्रुत्वा कीदृशं गर्जितं श्रवणसुभगं श्रव
णयोः सुभगं कर्णसुखदं तदिति किंचपुनर्यद्गर्जितं उच्छिलींध्रातपत्रां महीं कर्तुं प्रभवति समर्थो भवति उद्गतानि शिलींध्राणि भूमिस्फोटा एवातपत्राणि यस्यां सा तां ए
तादृशीं पृथ्वीं कर्तुं शक्नोषि किंभूताः राजहंसाः मानसायमानसरोवराय उत्काः समुत्कंठिताः ११ आपृच्छस्वेति हे वारिवाह अमुं शैलं चित्रकूटं आपृच्छ स्वहे मि
त्राश्लेषमामिनं मंत्रयस्व कीदृशं अमुं प्रियसखं प्रियश्चासौ सखा च प्रियसखस्तं प्रियं किंकृत्वा समालिंग्य आलिंगनं दत्वा कीदृशं अमुं तुंगमुच्चैस्तरं पुनः की

कर्तुं यच्च प्रभवति महीमुच्छिलींध्रातपत्रां तच्छ्रुत्वा ते श्रवणसुभगं गर्जितं मानसोत्काः आकैलाशाद्बिसकिसलयच्छेदपाथे
यवंतः संपत्स्यंते नभसि भवतो राजहंसाः सहायाः ११ आपृच्छस्व प्रियसखममुं तुंगमालिंग्य शैलं वंद्यैः पुंसां रघुपतिपदैरंकि
तं मेखलासु काले काले भवति भवतो यस्य संयोगमेत्य स्नेहव्यक्तिश्चिरविरहजं मुंचतो वाष्पमुष्णं १२ मार्गं तावच्छृणु कथयतस्त्वत्प्र
याणानुरूपं संदेशं मे तदनु जलद श्रोष्यसि श्रोत्रपेयं खिन्नः खिन्नः शिखरिषु पदं न्यस्य गंतासि यत्र क्षीणः क्षीणः परिलघु पयः स्रोत

दृश्यम् अमुं मेखलासु पर्वतमध्यप्रदेशेषु रघुपतिपादैः कितं चिह्नितं रामचंद्रपादपवित्रमित्यर्थः कीदृशै रामचंद्रपदैः पुंसां पुंसां पोपूज्य १३
रुषाणां वंद्यैर्वंदनीयैः यस्य शैलस्य काले वर्षाकाले भवतस्तव संयोगं संपर्कमेत्य प्राप्य स्नेहव्यक्तिः प्रेमाविर्भावो भवति कीदृशस्य यस्य उष्णमुष्णं
वाष्पं मुंचतः कीदृशं वाष्पं चिरविरहाज्जातं चिरविरहजं वाष्पं नेत्रजलं वाष्पो नेत्रजलोष्मणोरिति विश्वः चिरमागतानां वाष्पपातो भवतीति भावः १२
मार्गमिति हे जलद तावद्विरामं मम कथयतः सतः मार्गं शृणु कीदृशं मार्गं त्वत्प्रयाणानुरूपं भवद्गमनयोग्यं तदनु तस्मान्मार्गकथनादनु पश्चात्तं मम सं
देसं श्रोष्यसि कीदृशं संदेसं श्रोत्राभ्यां पेयं कर्णसुखदं यत्र मार्गे त्वं गंतासि यास्यसि किंकृत्वा खिन्नः खिन्नः श्रांतः सन् शिखरिषु पर्वतेषु पदं चरणं न्यस्य स्थापयित्वा पदमिति जातावेक
वचनं तथा क्षीणः २ सन् स्रोतसां निर्झराणां परिलघु निर्मलत्वात् परिलघु लाघवोपेतं पयः सलिलं उपभुज्य गृहीत्वा अन्योपि पांथो मार्गे विश्रांतः सन् शीतलं

अद्रेरिति हे जलधर अस्मात्स्थानात् उत्पतयाहि खमाकाशं संप्रति कीदृश: उदङ्मुख: उदीच्यं मुखं यस्य स: उदङ्मुख: अलकाया: उदीच्यमुखमस्तीति कादृ
शात्स्थानात्सरसानिचुला: वेतसायस्मिन् तत्सरसनिचुलं तस्मात् कीदृश: त्वं किं तं सभयं यथा स्यात्तथा मुग्धसिद्धांगनाभि: दृष्टोत्साह: दृष्टसंरंभ: अ
वलोकनीयत्नारंभ कीदृशीभि: इति किंचित् उन्मुखीभिरुन्नतमुखीभि: मुग्धा मूर्खा सिद्धांगना: देवविशेषांगना: मुग्धसिद्धांगनास्ताभि: मुग्ध: सुंदरमूर्खयो
रित्यमर: इतीति किं पवन: अद्रे: चित्रकूटस्य शृंगं हरति किं उत्पाटयति किं इति हेतो: दृष्टोत्साह: त्वं किं कुर्वन् पथि मार्गे दिङ्नागानां दिग्गजानां स्थूलहस्तावले
पान् पीवरिकरिकराक्षेपान् परिहरन् हस्तो नक्षत्रभेदे स्यात् करे भकरयोरिति विश्व: अन्यथा प्रतिगजशंकया दिग्गजास्त्वां पीडां वर्षेरो: खंडशो नेष्यंतीति भा
वो मार्गे सावधानतया गंतव्यमिति विवच्यते १४ रत्न० हे धाराधर एतत्पुरस्तात् अग्रतो वाल्मीकी आदाखंडलस्य शक्रस्य धनु: खंडं महेंद्रचापस्यैकलं प्रभवति स

अद्रे: शृंगं हरति पवन: किंस्विदित्युन्मुखीभिर्दृष्टोत्साहश्चकितचकितं मुग्धसिद्धांगनाभि: स्थानादस्मात्सरसनिचुलादुत्प
तोदङ्मुख: खं दिङ्नागानां पथि परिहरन् स्थूलहस्तावलेपान् १४ रत्नच्छायाव्यतिकर इव प्रेक्ष्यमेतत्पुरस्तात् वल्मीकाग्रात्प्रभ
वति धनु:खंडमाखंडलस्य येन श्यामं वपुरतितरां कांतिमापत्स्यते ते बर्हेणेव स्फुरितरुचिना गोपवेषस्य विष्णो: १५ त्वय्यायत्तं कृषि
फलमिति भ्रूविकारानभिज्ञै: प्रीतिस्निग्धैर्जनपदवधूलोचनै: पीयमान: ॥ मुत्पद्यते कीदृशं धनु: खंडं रत्नच्छायाव्यतिकर इव प्रेक्षं दर्शनीयं

रत्नच्छायानां पुष्परागमाणिक्यप्रभाणां व्यतिकरो मिश्रीभावस्तद्वत्प्रेक्ष्यं येन धनु:खंडेन तव वपुरतितरामतिशयेन कांतिं शोभामापत्स्यते प्राप्स्यति कीदृशं वपु:
श्यामं मेचकं तत्र वक्रस्थितं विष्णोरिव यथा विष्णोर्वपु: श्यामं बर्हेण मयूरपिच्छेन शोभते इत्यर्थ: कीदृशस्य विष्णो: गोपवेषस्य गोपालस्य वेषो यस्य स तथा
कीदृशेन बर्हेण स्फुरितरुचिना उद्दामकांतियुक्तेन: १५ त्वयीति हे घन आघन त्वं भूय: पुनरपि उत्तरेणोत्तरेण व्रज उत्तरस्यामेव दिशि व्रजेत्यर्थ: किं कृत्वा मालं ग्रा
मांतरात् धीं मालमुन्नतभूमिकाप्रदेशं समारुह्य किंचित्सोकां वृष्टिं कृत्वा: पश्चात्त्वं गच्छे: कीदृशस्त्वं लघुगति: सत्वरगमन: ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥

मे॰ का॰
टी॰ म॰
४

तत्रत्वयाकालातिपातोनकर्त्तव्यः मालंकपाटिरम्येचवसतेश्चवहिर्भुवी त्यनेकार्थः कीदृशंमालंसद्यः सीरोत्कषणासुरभिक्षेत्रंसद्यस्तत्कालमेवसीरा
णाकर्षणेनसुरभीणिक्षेत्राणियस्मिन्तत्कीदृशास्त्वंजनपदवधूलोचनैः पीयमानःप्रीत्याश्रयानिरीक्षमाणांकीदृशैः भ्रूविकाराणां भ्रूविलासानां अ
नभिज्ञैः पामरत्वात् कटाक्षविक्षेपादक्षैः इतिप्रीतस्निग्धैः प्रीत्याल्लेहेनस्निग्धातिचिक्कणानिप्रीतिः नथातैः इतीतिकिं हेघनकृषेः फलंसस्यादिकंत्व
यिआयत्तंत्वदधीनंवर्त्तते इत्यादरेणामुग्धस्निग्धनयनैः रंगनाभिः प्रेक्षमाणाः कृषिफलंत्वद्धापत्तैः १६ त्वामिति हेधाराधराम्रकूटः सानुमान्पर्वत
साधुसम्यक्प्रकारेणमूर्द्धमिस्तकेनवक्ष्यतिवोढा तासिरमानक्ष्यतीर्थः आम्राःसूताकूटेषुयस्यसआम्रकूटः सानूमिशिखराणिविद्यतेयस्यससानुमान्
कीदृशं त्वांआसारेणवेगवद्वर्षेणधारासंपातेनप्रशमितोवनस्यउपप्लवोनेदाघदावानलोयेनसतथातंपुनः कीदृशंअध्वश्रमेणमार्गश्रमेणापरिगतो

द्र॰ १

सद्यः सीरोत्कषणासुरभिक्षेत्रमारुह्यमालंकिंचित्पश्चाद्व्रजलघुगतिर्भूयएवोत्तरेण १६ त्वामासारप्रशमितवनोपप्लवंसा
धुमूर्द्ध्नावक्ष्यत्यध्वश्रमपरिगतंसानुमानाम्रकूटः नक्षुद्रोपिप्रथमसुकृतापेक्षयासं[illegible]संश्रयायप्राप्तेमित्रेभवतिविमुखःकिं
पुनर्यस्तथोच्चैः १७ अध्वक्लान्तप्रतिमुखगतंसानुमानाम्रकूटः तुंगेनत्वांजलदशिरसाधारयिष्यत्यवश्यं आसारेणत्वमपिशम
घ॰ १ येस्तस्यनैदाघमग्निसद्भाववाढ्यःफलतिनचिरेणोपकारोमहत्सु १८ ॥ त्वमः आध्वश्रमपरिगत्तिस्तंखेदाभिभूतंयमोक्तोमर्थः यतः क्षुद्रोपिनी
चोपिकृपणोपिउपकारिणिमित्रेसंप्राप्तेसंश्रयणायसमागतेसतिविषमीनभवति किंपुनस्तथा उच्चैस्तेनप्रकारेणउच्चैस्तरेणाक्षुद्रोदरिद्रकृपणोनशं
शेउक्तंतु च्छितियादवायः उक्तोभवतितस्यकिंपुनर्वाच्यंकयाप्रथमंचतत्सुकृतंचप्रथमसुकृतंतस्यापेक्षावाक्षिएवंतयाप्रथमोमसुकृतापेक्षयाभोग्यद
त्वयातस्याद्रेर्निदाघोपद्रवोनिराकारिसत्वमूर्द्धविस्तरेव १७ अध्वः हेनीरधराम्रकूटः सानुमान्त्वंसिरसाशिषिरेणावश्यंधारयिष्यतिकीदृशेनशिरसातुंग
नउच्चैस्तरेणाकीदृशंत्वांअध्वक्लान्तंआसौप्रतिमुखगतअध्वक्लान्तप्रतिमतिगतंहेजलद त्वमपितस्याम्रकूटस्यनैदाघमग्निशमयेनिदाघदावानलंविध्यापये कैना
सारेणधारासंपातेनवेगवद्वृष्ट्या इत्यर्थः कीदृशं तंसद्भावाढ्यः सत्फलाःयुक्तोयमर्थः महत्सुसत्पुरुषेषुउपकारश्चिरेणानफलतिकिंतुसद्यद्रवफलतीत्यर्थः ॥ १८ ॥

प्रतिमुखे
गतः

उपलै विषमस्तास्मिन् =२

२॥

छन्नो॰ हेजीमूतअचलसानुमान्आम्रकूटः नूनंनिश्चितंअमरमिथुनप्रेक्षणीयांअवस्थांयास्यतिप्राप्स्यतिअमरामरांगनायुगलदर्शनीयअवस्थांगमिष्य
तिक्वसतिशिखरंत्वयिआरूढेसतिदेवदेवीमिथुनानांस्तहरणीयदर्शनोभविष्यतीत्यर्थः कीदृशेत्वयिस्निग्धवेणीचिक्कणवेणीतयासवर्णः सदृशःस्निग्धवेणीसव
र्णस्तस्मिन् अचलः कइवभुवःपृथिव्याःस्तनइवकीदृशःस्तनःमध्येश्यामःपुनःकीदृशःशेषविस्तारपांडुःपुनःकीदृशःकाननाम्रैःछन्नोपांतःकाननस्याम्रा
णिकाननाम्राणिःअथवाकाननानिवनानिआम्राश्चतैःछन्नमुपांतांसमीपंअस्यसकीदृशेःकाननाम्रैःपरिणतानियानिफलानिपरिणतफलानिपक्वफलानितैर्द्योत
तेभ्रेयेवा॥शीलापरिणतफलद्योतिनस्तैः १९ स्थित्वेति हेमेघत्वंतत्यरंतन्मेतीर्णस्तन्रेवांनर्मदांद्रक्ष्यसीत्यन्वयंतस्मादाम्रकूटात्परंपरिभागवर्निवर्त्मकर्मस्तूर्णीवा

पाठांतरं छन्नोपांतःपरिणतफलद्योतिभिःकाननाम्रैः त्वय्यारूढेशिखरमचलःस्निग्धवेणीसवर्णे नूनंयास्यत्यमरमिथुनप्रे
क्षणीयामवस्थांमध्येश्यामःस्तनइवभुवःशेषविस्तारपांडुः १९ स्थित्वातस्मिन्वनचरवधूभुक्तकुंजेमुहूर्तंतोयोत्सर्गात्द्रुततरग
तिस्तत्परंवर्त्मतीर्णः रेवांद्रक्ष्यस्युपलविषमेविंध्यपादेविशीर्णांभक्तिच्छेदैरिवविरचितांभूतिमंगेगजस्य २० तस्यास्तिक्तैर्वनगज
मदैर्वासितंवांतवृष्टिर्जंबूकुंज प्रतिहतरयंतोयमादायगच्छेः ॥ तस्मिन्किंकृत्वातस्मिन्नाम्रकूटेगिरौमुहूर्तंयावत्स्थित्वाकीदृशेतस्मिन्व
नेचराणांकिरातानांवधूभिर्भुक्ताःकुंजालतागृहाण्यत्रसतस्मिन्निकुंजोवाल्लीवेल्लतादिपिहितोदरइत्यमरः तोयस्यउत्सर्गोवितरणंतस्मात्द्रुततरगतिःअतिश
यनशीघ्रतरगमनः कीदृशींरेवांविंध्यपादेविस्तीर्णांविंध्याचलपर्यंतपर्वतेविस्तीर्णांरेवंडसःस्फुरितांकिंदृशेविंध्यपादेउपलविषमेपाषाणशिलादंतुरेकीदृशींरेवां
गजस्यांगेविरिचितांभूतिमिवशृंगारमिवभक्तयोरचनास्तासंच्छेदैर्भंगीभिगजशरीरेविरचितंभूतिमिवशृंगारमिवभक्तयोरचनास्तासंच्छेदैर्भंगीभिर्गजशरीरेविरचितां
भूतिमिवभूतिमतिंशृंगारेज्ञातोभस्मनिसंपदीतिविश्वः अयमपितवनयनयोर्महालाभोयतत्वंरेवांद्रक्ष्या ॥ २० ॥ तस्याः हेवनदत्तस्यारेवायाःतोयंजलमादाय
गृहीत्वायतोगच्छेः कीदृशंतोयंवनगजमदैर्वासितंविंध्यपर्वतवनगजानांमदैःकरादानेसुरभिकीदृशैर्वनगजमदैःतिक्तैःसुगंधभिनितिक्तिरसवद्भिश्च॥ ॥ ६ ॥ ६ ॥

शेषविस्तारपांडुपस्य सः

भक्तायोता छेदैति भक्ति छेदै =२

निक्ता रसे सुगंधे वेति विश्वः कीदृशस्त्वं वांता वृष्टिर्येन स उद्गीर्णवर्षः कृतवमनश्च सन् तस्या नर्मदायाः पीत्वा सुखं भवति कीदृशं तोयं जंबूकुंजैः प्रतिहतो रयो वेगो
यस्य तत् प्रतिबद्धवेगं सुखपेयमित्यर्थः हे घन त्वां अनिलो व्योमवातः ... तुलयितुं दोलयितुं न शक्तः प्रतिन समर्थो भविष्यति कीदृशं त्वां अंतः सारं अंतर्मध्ये सा
रं बलं यस्य तत्तं युक्तोयमर्थः हि युतो रिक्तः सर्वो जनो लघुर्भवति प्रकंपो भवतीत्यर्थः पूर्णता सारवत्ता गौर ... या कंपाय भवतीत्यर्थः २१ नीपमिति हे पयोधर सारं
गो श्चातकाव यो हकास्तेन तव मार्गं सूचयिष्यंते अनेन यथा मेघोगतः परं तास्माभिर्दृष्टः इति परस्परेण कथयिष्यंतीत्यर्थः किं कृत्वा नीपं स्थलकदंबकुसुमं दृष्ट्वा कीदृ
शं नीपं हरितकपिशं हरितं च तत् कपिशं च हरितकपिशं हरितश्यामारुणापालाशो हरितो हरित्श्यामास्तणांस्याक पिशमिति चामरः स्थलकंदंबो नीपः स्यादिति पुलक
के हरितकपिशं केशरैः किंजल्कैः कीदृशैरर्द्धरूढैरर्द्धोद्गितैव पुनः सारंगाः मृगाः अनुकच्छं कच्छं अनुलक्षीकृत्य कंदली भूकंदली र्दृष्ट्वा कीदृशीः कंदलीः आविर्भू

> अंतस्सारं घन तुलयितुं नानिलः शक्ष्यति त्वां रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय २१ नीपं दृष्ट्वा हरितकपिशं केशरैरर्द्धरू
> ढैराविर्भूतप्रथममुकुलाः कंदलीश्चानुकच्छं दग्धारण्येष्वधिकसुरभिं गंधमाघ्राय चोर्व्याः सारंगास्ते जललवमुचः सूचयिष्यंति
> मार्गं २२ अंभोबिंदुग्रहणरभसांश्चातकान्वीक्षमाणाः श्रेणीभूताः परिगणनया निर्दिशंतो बलाकाः ॥ ६ ॥

ताः प्रकटीभूता प्रथमान
वीना मुकुलाः कलिकाः यासां ताः ताः चापुनः उर्व्याः पृथिव्याः गंधमाघ्राय सारंगाः मातंगास्तेन तव मार्गं सूचयिष्यंति केषु दग्धारण्येषु दवदग्धे कान
नेषु कीदृशं अधिकसुरभिं अतिशयेन घ्राणतर्पणं कीदृशस्य ते तव जललवमुचः जलप्रायमनूपं स्यात्पुंसि कच्छस्तथाविध इत्यमरः सारंगापंगानियपांते
सारंगाः मृगाः सारंगायति भृंगाः सारं सलिलं गच्छंतीति सारंगाः चातकाः पि सारंगश्चातके भृंगे कुरंगे च मतंगजे इति विश्व २२ अंभो० सिद्धा देवविशेषाः प्रिय
सहचरी संभ्रमालिंगितानि मानयिष्यंति अनुभविष्यंति प्रियाश्च ताः सहचर्यः अभीष्टवनितास्तासां संभ्रमेण आदरेण भयेन वा लिंगितानि गाढोपगूढानि प्रिय
सहचरी संभ्रमालिंगितानि संभ्रमश्चादरे भय इत्यनेकार्थः किं कृत्वा मासाद्य प्राप्य कदा स्तनितसमये गर्जितकाले कीदृशानि प्रिय· ॥ २ ॥ ६ ॥ ६ ॥ ६ ॥

सोत्कंठानि उत्कंठोपपुन्नानि सोत्कंपानि वा पाठस्तत्र भयेन प्रवलकंपसहितानि कीदृशाः सिद्धाः परिगणनया संख्यया वलाकाः विशकंठिका निर्दिशंतः अयं पंक्तौ कतिवलाकाः संतीति संख्यां कुर्वंतः चातकान्वीक्षमाणाः प्रेक्ष्यमाणाः कीदृशान् चातकान् अंभोग्रहणरभसान् अंभसो जलस्य विंदूनां ग्रहणे अंभुवि दुग्रहणं तस्मिन्वर्षोदकविंदूनांग्रहणे रभसान् सोत्कंठान् चतुरान्वात घोरभससु हठे मोहे चोत्कंठायामपि स्मृतः इत्यनेकार्थः २३ उत्प० हे सखे हे नीरदहे सुद र अहं तेतव पर्वते काल क्षेपं वेलाविलंवं उत्पश्यामि उत्प्रेक्षे कालविलंवमवलोकयामीत्यर्थः तेतव किं कर्तुमिच्छोः द्रुतं क्षिप्रं मत्प्रियार्थं यियासोः गंतुमिच्छोः कीदृशे पर्वते ककुभसुरभौ ककुभाः अर्जुनावृक्षास्तैः सुरभिः सुगंधितस्मिन् अतो हेतोः हे घन कथमपि केनापि प्रकारेण आशु शीघ्रं गंतुं व्यवस्येत् उद्यमं कुर्यात् कीदृशस्त्वं शुक्लापांगैर्मयूरैः प्रत्युद्यातः संमुखं गतः किं कृत्वा केकाः मयूरवाणीः स्वागतवचनीकृत्य किंभूतैः शुक्लापांगैः सजलनयनैः आनंदाश्रु

त्वामासाद्य स्तनितसमये मानयिष्यंति सिद्धाः सोत्कंठानि प्रियसहचरीसंभ्रमालिंगितानि २३ उत्पश्यामि द्रुतमपि सखे मत्प्रियार्थं यियासोः कालक्षेपं ककुभसुरभौ पर्वते पर्वते ते शुक्लापांगैः सजलनयनैः स्वागतीकृत्य केकाः प्रत्युद्यातः कथमपि भवान्गंतुमाशु व्यवस्येत् २४ पांडुच्छायोपवनवृत्तयः केतकैः सूचिभिन्नैर्नीडारंभैर्गृहबलिभुजामाकुलग्रामचैत्याः ॥ पूरितलोचनैः पर्वते २

इति वीप्सायां द्विर्भावः मयूरो वर्हिणो वर्ही शुक्लापांगः शिखावलइति यादवः क्षेपो विलंवे निंदायामिति विश्वः २४ पांड० हे जलद दशार्णाः जनपदविशेषाः कतिपयदिनस्थायिहंसाः संपत्स्यंते भविष्यंति कतिपयदिनेषु स्थायिनो हंसा येषु ते तथा कीदृशाः दशार्णाः पांडुश्चेतासौ छाया शोभा यासां ताः वृत्ता उपवनानां वृतयो वेष्टनानि येषां ते क्व सति त्वयि सन्निकृष्टे सति कैः केतकैः केतककुसुमैः किंभूतैः केतकैः सूचिभिन्नैः सूचीषु मुकुलाग्रेषु भिन्नानि विकसितानि सूचीभिन्नानि तैः केतकीमुकुलाग्रेषु सूचीः स्यादिति शब्दार्णवे केतकीकुसुमैः पांडुवर्णा उपवनानां वृतयो येषां ते पुनः कीदृशाः गृहबलिभुजां नीडारंभैः आकुलग्रामचैत्याः गृहबलिभुजा वटका नां काकानां वा नीडारंभैः पक्षिविशेषवेशमभिः आकुलानि व्याप्तानि व्याप्तानि वा ग्रामाणां चैत्या

देवतायतनानि पूज्यवृक्ष्यवायेषु तेन तथा चैत्यमायतने प्रोक्तं पूज्यः वृक्षे तथैव चेत्यनेकार्थः पुनः कीदृशाः दशार्णाः परिणतानि परिपक्वानि यानि फलानि तैः श्या
माः जंबूवनानामंताः प्रांताः स्वरूपावायेषु तेन तथा अंतमंतस्वरूपयोरिति विश्वः २५ तेषामिति हे मेघ हे धराधर भवान् कामुकत्वस्य कामितायाः सद्यस्तत्कालं अविक
लं सकलं फलं लप्स्यते किं कृत्वा तेषां दशार्णानां दिक्षु दिशासु प्रथितं विदिसालक्षणां राजधानीं गत्वा प्रथितं प्रसिद्धं विदिशालक्षणां नामयस्याः सा तां लक्षणा नाम चि
ह्नयोरिति विश्वः प्राधाननगरी राज्ञां राजधानीति कथ्यते इति शब्दार्णवे तस्यां राजधान्यां त्वां वेत्रवत्याः सरितः पयो जलं पास्यसि पानं करिष्यति कीदृशं पयः चलोर्मि
चलाः चंचलाः ऊर्म्मयः कल्लोला यस्मिन् तत् चलोर्मि तत्रया स्वादुमधुरं यत् यस्मात् मधुरं पयः पास्यसि तत्तस्मात्त्वमवश्यं गंतव्यमेव कीदृशं पयः तीरोपांतत्रतीरोपां

त्वय्यासन्ने परिणतफलश्यामजंबूवनांताः संपत्स्यंते कतिपयदिनस्थायिहंसा दशार्णाः॥ २५ तेषां दिक्षु प्रथितविदिसालक्षणां रा।
जधानीं गत्वा सद्यः फलमविकलं कामुकत्वस्य लब्धा तीरोपांतस्तनितसुभगं पास्यसि स्वादु यत्तत्सभ्रूभंगं मुखमिव पयो वेत्रवत्याश्च
लोर्मि २६ नीचैराख्यं गिरिमधिवसेस्तत्र विश्रामहेतोः त्वत्संपर्कात् पुलकितमिव प्रौढपुष्पैः कदंबैः यः पण्यस्त्रीरतिपरिमलोद्गा
रिभिर्नागराणामुद्दामानि प्रथयति शिलावेश्मभिर्यौवनानि॥ २७॥ ते सरित्तीरसमीपयत्तत्स्तनिततेन सुभगं मनोहरं तत्पयः किमि
व सभ्रूभंगं मुखमिव भ्रूभंगस्थाने ऊर्म्मय एव निरूपिताः मुखमध्यं तरा किंचित्सीत्कारशब्दं भवति कामुको पि कांतामुखं पिबन्नुत्सुखरः स्यादेव २६ नीचैः
रेवावीहतत्रतस्यैव विदिशायां प्रधाने नगरे नीचैराख्यं गिरिं नीचैर्नामानं पर्वतं अधिवासः अधिवासं कुर्याः कुतो हेतोः विश्रामहेतोः विश्रामनिमित्तं कीदृशं
गिरिं त्वत्संपर्कात् पुलकितमिव त्वत्समागमात् कंटकितमिव कैः कदंबैर्नीपैः कीदृशैः कदंबैः प्रौढपुष्पैः बहुकुसुमैः यः शैलो नागराणां नगरवासिनां नृणां यौवना
नि प्रथयति विस्तारयति प्रकटीकरोतीत्यर्थः कैः शिलावेश्मभिः कंदरामंदिरैः कीदृशैः पण्यस्त्रीरतिनपरिमलोद्गारिभिः पण्यस्त्रीणां रतिपरिमलः सुखविमर्द्दस्तद्गंधस्त
मुद्गिरतिमुंचंतीति पण्यस्त्रीरतिपरिमलोद्गारिणि तैः विमर्द्दोत्थपरिमलोद्गंधे मनोहरेत्यमरः कीदृशानि यौवनानि उद्दामानि निरवधियोवनांतकान्यैः स्त्रीगणाः कामेऽपि

विश्रांतः॰ हेमुदिरतत्रस्वर्णाख्येपर्वतेविश्रांतः सन्नग्रतोव्रजः किंकुर्वन्नुद्यानानांपूर्वंकाजालकानिसिंचन्नवृष्टिंकुर्वन्नपुथिकानांलकोसिंचन्वनेलक
रोः कीदृशानिनगनदीतीरजातानिनगनदीनांसरिदस्तिसन्नीरसमुद्भूतानिकीदृसस्त्वंपुष्पलावीमुखानांमालाकारिणीनांक्षणपरिचितः क्षणंमुहूर्तंपरि
चितपरिज्ञातः कस्मात्छायादानाच्छायाकरणात्कीदृशीनांतासांलानकर्णोत्पलानांम्लानीभूतश्रवणभूषणोदीवराणांगंडयोः कपोलयोः स्वेदःस्यापन
यनेनप्रमार्जनेनतेरुजापीडितयाक्लिष्टानिम्लानानिकर्णोत्पलानियषांतानितेषांअथवारुजाइतितृतीयायदागंडस्वेदापनयनकपोलघर्मवारिणःधनावर्जन
मेवगंडस्वेदाकोरकजालमंकुलाःकुड्मलमुकलानितुल्योनीतिहलायुधः २८ वक्रः॰हेपाथोदयदपियक्रपिभवतःस्तववक्रःपंथाभवतितथापित्वंउत्तयिन्याअवंत्यासौ
धोत्संगप्रणयविमुखोमास्मभूःमाभूरित्यर्थःकीदृशस्यभवतःउत्तराशांउत्तरदिशंप्रस्थितस्यगमनायकृतोद्यमस्यसौधानांतुंगेषुपरिभागेषुप्रणयमरिचयःस्नेहोतस्य

विश्रांतः सन्नुव्रजनगनदीतीरजातानिसिंचन्नुद्यानानांनवजलकणैर्यूथिकाजालकानिगंडस्वेदापनयनरुजाक्लांतकर्णोत्पला
नांछायादानात्क्षणपरिचितःपुष्पलावीमुखानां २८ वक्रःपंथायदपि भवतःप्रस्थितस्योत्तराशांसौधोत्संगप्रणयविमुखोमास्म
भूरुज्जयिन्याः विद्युद्दामस्फुरितचकितैस्तत्रपौरांगनानांलोलापांगैर्यदिनरमसेलोचनैर्वंचितोसि २९ वीचीक्षोभस्त नि॥ १॥
तविहगश्रेणिकांचीगुणायाः संसर्पंत्याःस्खलितसुभगंदर्शितावर्तनाभेः॥ १॥ १॥ विमुखः प्राङ्मुखोमास्मभूः तलदित्यर्थः हे
कमलवाहतत्रतस्यांविशालायांयदिपौरंगनानानंलोचनैनरमसेतदात्वंवंचितोसिकिंभूतेलेविनैः विद्युदामस्फुरितचकितैः विद्युत्स्फुरितेभ्यः
चकितैःभीतैः लोलापांगैः चलकटाक्षैः प्रणयःस्यात्परिचयेयात्रायांसौहृदेपिचेतिविश्वः २९ वीची॰ हेवारवाहनिर्विंध्यायाः नामनद्याः पथिमार्गेंत
वनिकांताविंध्यात्निर्विंध्यंतस्याः किंकृत्वारसात्यरंतरंसन्निपत्यजलाभ्यंतरंप्रविश्येत्यर्थः तस्याःनिर्विंधायाःपयःपीत्वाइत्यर्थः कीदृश्यास्तस्याःवीची
क्षोभेणस्तनितामुखराविहंगानांहंसानांश्रेणिपंक्तिः रेवकांचीगुणोमेखला सूत्रंयस्याःसातस्याः हियस्मात्कारणात्स्त्रीणांप्रियेषुभर्तृषु विभ्रमोवि
लासः आद्यप्रथमंप्रणयवचनंभवति आचनैत्वभसंभ्रमइतिहैमः अन्यत्ररसेनशृंगारेणाभ्यंतरोभव शृंगारादौजलेवीर्येसुवर्णेविषश्रुक्रयोः॥ १॥

मे॰ का॰
टी॰ म॰
७

आत्मोदेचरसंप्राहुरितिशब्दार्णवे वामलोचनाहि विभ्रमैरेव स्फुरताभिलाषमाविर्भावयंतिन तु प्रार्थनां कुर्वंतीति ३० वेणी॰ हेहेतलनयन्नो सिंधुर्नो
मनदीयतेविधिनायेनोपायेनकार्श्यंकृशत्वंत्यजति जहानिसरावविधिस्त्वया उपपाद्यः किंकुर्वंती तेतवसौभाग्यंव्यंजयंतीप्रगटीविदधतीकयाविरहाव
स्थया कीदृशस्यतेतवतांनिर्विंध्यांनामधेयां नदींअतीतस्यातिक्रांतस्यसमुल्लंघितस्य किंभूतावेणीभूतप्रतनुसलिलावेणीभूतप्रतनुप्रक
र्षेणाल्पप्रवाहंसलिलंयस्याः सापुनः किंभूताजीर्णपर्णैः पांडुछायापांडुरछविः कीदृशैःजीर्णपर्णैः तटेषुरुहंतीतितटरुहायेतरवोवृक्षास्ते
भ्योभ्रंशीतितटरुहतरुभ्रंशीनितैस्तीरोद्भूतवृक्षेभ्यः पतितैः येनसासिंधुर्दौर्बल्यंत्यजतितथैवविधेयमितिभावः ३१ प्राप्येति हेपर्जन्यत्वंविशालां

निर्विंध्यायाः पथिभवरसाभ्यंतरंसन्निपत्यस्त्रीणामाद्यंप्रणयिवचनंविभ्रमोहिप्रियेषु ३० वेणीभूतप्रतनुसलिलांता
मतीतस्यसिंधुः पांडुछायातटरुहतरुभ्रंशिभिर्जीर्णपर्णैः सौभाग्यंतेसुभगविरहावस्थयाव्यंजयंती कार्श्यंयेनत्यज
तिविधिनासत्वयैवोपपाद्यः ३१ प्राप्यावंतीनुदयनकथाकोविदग्रामवृद्धान् पूर्वोद्दिष्टामनुसरपुरींश्रीविशालांविशा
लां स्वल्पीभूतेसुचरितफलेस्वर्गिणांगां गतानांशेषैः पुण्यैर्हृतमिवदिवः कांतिमत्खंडमेकं ॥ ३२॥ १ ॥ १ ॥ १ ॥

उज्जयनींप्रत्यनुसरगछ कीदृशंविसालंश्रीविशालांश्रियाविशालाश्रीविशालातंपुनः किंभूतांपूर्वोद्दिष्टांपूर्वमुद्दिष्टापूर्वोद्दिष्टा तांप्रथ
मकाथह तांकिंकृत्वाअवंतीनमालवान्देशान्प्राप्यकीदृशान्उदयनकथाकोविदग्रामवृद्धान्उदयनस्यकथा तस्यांकोविदाः पंडिताःग्रामवृ
द्धाग्रामजरत्पुरुषायेषुतेऽतानउदयनकथाकोविदग्रामवृद्धान् उत्प्रेक्षतेविशालांपुरीकिमिवदिवः स्वर्गस्यएकंप्रकृष्टंखंडमिवकीदृशंस्वर्गिणां
देवानांशेषैरवशिष्टैः पुण्यैःहृतंसमानीतंकीदृशानांस्वर्गिणांगांधरांगतानांजातानांक्वसति सुचरितफलेपुन्यविपाकेस्वल्पीभूते सतिकी
॥ दृशंखंडकांतिमनदीप्रदीप्तं ॥ ३२ ॥ १ ॥ १ ॥

६ १

दार्घीः हे कामुक यत्र यस्यां स्त्रीणां सुरतग्लानिं संभोगजनाग्लिं स्म तां सिप्रा वातां पवनो हरति अपनयति प्रावातः किं कुर्वन् सारसानां कूजितं शब्दं दार्घी
कुर्वन् कीदृशं पटुमदमकलं पटुमदेन कलं मनोहां अथवा पटु पाटवोपेतं मदेन हर्षेण कलं मधुरं मदकलं प्रत्यूषेषु सिप्रावातः स्त्रीणां संभोगग्लानिं हरतीति किं भूतः सिप्रा
वातः स्फुटितानां विकशितानां कमलानां आमोदेन परिमलेन सह यो मैत्री संसर्गस्तेन कषायः सुरभिः किं भूतः सिप्रावातः अंगानुकूलसुखस्पर्शः सिप्रावातः क इ
व प्रियतमो वल्लभ इव स्त्रीणां सुरतिग्लानिं हरति कीदृशो वल्लभः प्रार्थनाचाटुः कारः प्रार्थना संभोगप्रार्थना तस्यां चाटुकारः प्रियप्राय वचनकारः रागद्वे
षकषायोऽस्त्री निर्यासे सौरभे रसे इति यादवः ३२ आदिकुलकं हे अंभोधर हे अंभोद यस्यां विशालायां सलिलनिधयः समुद्राः तोयमात्रा विशेषाः तो
यमात्रं जलप्राचुर्यमेवाशेषमवशिष्टं येषां ते तथा एतादृशाः सन्तः संलक्ष्यन्ते अनुमीयन्ते किं कृत्वा हारान् मौक्तिकहारान् दृष्ट्वा कीदृशान् तारान् शुद्धान्

चतुर्भिः कुलकं दीर्घी कुर्वन्पटुमदकलं कूजितं सारसानां प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः यत्र स्त्रीणां हरति सुरत
ग्लानिमंगानुकूलः सिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः ३२ हारांस्तारांस्तरलगुलिकान् कोटिशः शंखशुक्तीः शष्प
श्यामान्मरकतमणीनुन्मयूखप्ररोहान् यस्यां दृष्ट्वा विपणिरचितान् विद्रुमाणां च भंगान् संलक्ष्यन्ते सलिलनिधयस्तोयमात्राव

पुनः कीदृशान् तरलगुलिकान् हारमाध्यमहारत्नान् पुनः किं कृत्वाः कोटिशः शंखशुक्तीः दृष्ट्वा शंखाश्च शुक्तयश्च शंख ३ शेषा ३३
शुक्तयस्ताः पुनः किं कृत्वा मरकतमणीन् गारुडः रत्नान् कीदृशान् शष्पश्यामान् बालतृणवत् हरितवर्णान् पुनः कीदृशान् उन् मयूख
प्ररोहान् उन्मयूखा ऊर्ध्वगत किरणा एवांकुरा येषां ते तथा तान् च पुनः विद्रुमाणां भंगान् प्रवालखंडान् दृष्ट्वा कीदृशान् विपणिषु पण्यवीथिका
सु रचितान् स्थापितान् तारो मुक्तादि शंशुद्धौ तरले शुद्धिमौक्तिके इति विश्वः तरलो हारमध्यगः स्यात् मणिः पिंडमणौ महारत्ने गुलिकायां पारद इति शब्दार्णे
॥ वेशष्पं बालतृणं प्रोक्तमिति ॥ ३४ ॥ ६ ॥ ६ ॥ ६ ॥

मे·का·
टी·म·
८

प्रद्योत· यत्र यस्यां पुर्यां अभिज्ञः पंडितो जनः आगंतून् देशांतरान् इति रमयति विनोदयति इतीति किं अत्र अस्यां नगर्यां भो बांधवाः वत्सराजः प्र
द्योतस्य चंडप्रद्योतस्य प्रियदुहितरं वासवदत्तां जहे जहार पुनरत्रैव पुर्यां तस्य राज्ञः प्रद्योतस्य तालद्रुमवनमभूत् कीदृशं हैमं सुवर्णमयं पुनरत्रैव विशा
लायां किलेति सत्येन नलगिरिः उद्भ्रांतो बभ्राम किं कृत्वा उत्पाट्य उन्मदात् स्तंभमालानस्तंभमुन्मुल्य भ्रमदिति ३५ अथ युग्मं भर्तुरिति जालो· हे प
योदत्वं चंडीश्वरस्य महेश्वरस्य धाम गृहं प्रसादयायाः गच्छेः कीदृशं धाम पुण्यं याचनं पुण्यहेतु कीदृशस्य चंडीश्वरस्य त्रिभुवनगुरोः जगत्त्रयपूज्यस्य किं
कृत्वा अस्या उज्जयिन्याः हर्म्येषु धनिनं गृहेषु खेदनीत्वा मार्ग खेदं दूरीकृत्य कीदृशस्त्वं केशसंस्कारधूमैः रूपचितवपुः केशानां संस्कारो मधुद्रव्य धू

प्रद्योतस्य प्रियदुहितरं वत्सराजो ऽत्र जह्रे हैमं तालद्रुमवनमभूदत्र तस्यैव राज्ञः अत्रोद्भ्रांतः किल नलगिरिः स्तंभमुत्पाट्य दर
्पादित्यागंतून्रमयति जनो यत्र बंधूनभिज्ञः ३५ भर्तुः कंठच्छविरिति गणैः सादरं वीक्ष्यमाणः पुण्यं यायास्त्रिभुवनगुरोर्धा
म चंडीश्वरस्य धूतोद्यानं कुवलयरजोगंधिभिर्गंधवत्याः तोयक्रीडानिरतयुवतिस्नानतिक्तैर्मरुद्भिः ॥ ३६ ॥ जालोद्गीर्णै
रुपचितवपुः केशसंस्कारधूमैः बंधुप्रीत्या भवनशिखिभिर्दत्तनृत्योपहारः ॥ ३ ॥ पाथिवासनं तस्य धूमाः केशसंस्कारधूमास्तै रुप
चितवपुः परिपुष्टशरीरः कीदृशैर्धूमैः ३६ जालोद्गीर्णैः गवाक्षमार्गनिर्गतैः पुनः कीदृशस्त्वं भवनशिखिभिर्गृहे मयूरैर्दत्तनृत्योपहारः दत्तो
नृत्यमेवोपहारो उपायनं यस्मै स तथोक्तः कया बंधुप्रीत्या बंधोः प्रीतिस्तया बंधुरिति स्नेहेन कीदृशेषु हर्म्येषु कुसुमसुरभिषु पुष्पगंधवत्सु
रभिषु पुनः कीदृशस्त्वं अध्वखिन्नांतरात्मा अध्वना मार्गेण खिन्नः अंतरात्मा यस्य सः अध्वखिन्नांतरात्मा सर्वथा श्रांतः कीदृशेषु हर्म्ये
षु ललितवनितापादरागांकितेषु ललिता मनोज्ञा या वनिताः स्त्रियस्तासां पादास्तेषां रागो लाक्षारसस्तेनांकितानि ललितवनितापादरागां

उपचित
पुष्टस्य सः
=२
केशानां
संस्कारः
तस्य धूमाः
=२

अ २
३
जाले
उ दा
रैः

धूतं उद्यानं कुवलयानां कमलानां रजांसि दत्तो नृत्यस्य उपहारो यस्मै २
यस्मिन् तत् =२ कुवलयरजांसि तेषां गंधो वि
धूते येषां ते =२

१२

कितानितथातेषु: पुन: कीदृशं त्वं गतो: प्रथमै: पार्श्वैः इति सादरं वीक्ष्यमाणः इतीति किं भर्तुर्महादेवस्य कंठछवि किमेकवर्णस्यामात्रनव
सुभग त्वं कीदृशं धाम गंधवत्याः नामनद्याः मरुद्भिः वायुभिर्दूतोद्यानं कंपितारामवृक्षं कीदृशैर्मरुद्भिः कुवलयानां रजोभिः परागैः सुगंधिभिः उत्प
लपरागगंधवद्भिः पुन: कीदृशैर्मरुद्भिः तोयक्रीडासु निरतानामाशक्तानां युवतीनां स्नानं स्नानीयं चंदनादिविलेपनं तेन तिक्ताः सुरभयस्तै:
तोयक्रीडानिरतयुवतिस्नानतिक्तैः गर्णानां गणानां यथास्यादङ्गणे शेषप्रथमवये इति शब्दार्णवे स्नानीयेभिषवे स्नानमिति यादवः कटुतिक्तकषायस्तु सौ
रभ्येतिप्रकीर्तिताः ३२ युग्मं अपि० हेजलधरत्वमन्यस्मिन्नपिकाले संध्याव्यतिरिक्तेपिस्थलेनेत्त्वयास्थातव्यं किंकृत्वा महाकालं चंडीश्वरस्य स्थान

मेघस्य: कुसुमसुरभिष्वंधस्विन्नांतरात्मानीत्वावेदं ललितवनितापादरागांकितेषु ३१ युग्मं अप्यन्यस्मिन्जलध
रमहाकालमासाद्यकाले स्थातव्यंतेनयनविषयं यावदभ्येतिभानुः कुर्वन्संध्याबलिपटहतां शूलिनः श्लाघनीया
मामंद्राणां फलमविकलं लप्स्यसेगर्जितानां ३२ पादन्यासक्वणितरसनास्तत्र लीलावधूतैः रत्नछायाखचितवलि
भिश्चामरैः मासाद्य प्राप्य यावज्ञातः श्रीसूर्यो नयनविषयं दृष्टिपथमायाति तावत्तत्र स्थेयं किं कुर्वन् शूलिनः शंभोः संध्याबलिपटहतां संध्याय
लिः पूजा तत्रपटवाद्यकर्म कुर्वन्गर्जितानां मेघध्वनीनामविकलं फलं लप्स्यसे कीदृशानां गर्जितानां आमंद्राणां ईषद्गंभीराणां कीदृशां संध्या० श्लाघनीयं श्लाघ्या
ज्योत्स्या ३० पादन्यासे हेजलधरतत्र संध्यासमये वेश्यावारवधूः परापत्स्त्रियः त्वयि करक्षान् अमोक्षंते अर्द्धनेत्रावलोकनैरीक्ष्यंते इत्यर्थः किंभूताः वे
श्याः पादन्यासात्नृत्यांगपातैः क्वणिताः शब्दायमानारसनाः कंचनमेख० लायासांताः तथोक्ताः पुन: कीदृशैः रत्नछायाखचितवलिभिः क्लांतहस्ताः यु
ग्रहस्ताः कीदृशैः चामरैः लीलावधूतैः लीलयाविलासेन अवधूनानि कंपितानि लीलावधूतानितैः पुन: कीदृशैः रत्नछायाखचितवलिभिः रत्नानां
कर्केतनमणीनां छाययाकांत्यासमूहेन खचिता बाबलयः आमरदंडायेषां तानितैः किंकृत्वा लप्स्यकाशात्वर्षाग्रविंदून्प्राप्यवर्षणाम ॥ ६ ॥

मे·का· ऽग्रबिंदवः प्रधानबिंदवस्तान्कीदृशान् वर्षाग्रबिंदून्नखपदसुखान्नखानामग्राणि नखपदानि नखपदेषु सुखाः सुखावहास्तेन नखपदसुखाः

टी·म· तान् किंभूतान्कटाक्षान् मधुकरश्रेणिदीर्घान्भ्रमरपंक्तिविरलानपांगान् कामुकानां दर्शनीयं च लक्षणं शिवोपासनफलं लप्स्यसे इति ३९

२ पश्चा· हे वारद पश्चात्संध्यापूजानंतरं पशुपतेर्महेश्वरस्य नृत्तारंभे तांडवाडंबरप्रारंभे आर्द्रनागाजिनेच्छां आर्द्रं जिनं चर्म आर्द्रनागाजिनं च आर्द्रना

गाजिनं आर्द्रगजचर्म तस्मिन्निच्छाभिलाषस्तं हर निवर्तय तत्स्थाने त्वमेव भवेत्यर्थः कीदृशस्त्वं भुजतरुवनं भुजा एव तरवो वृक्षाः तेषां वनं ... भि

(रो) मौ... ऽभिव्याप्तः धिनाद्यधवलसदमः गोपानस्यां सौधशिखरवर्तिशालादौ नीत्वा गामयच्च किंभूतस्त्वं चिरचिरलसनात घिनविद्युत्कलित्रः खिन्नं

लांतह स्त्रां विश्वास्त्वं नीते नखपदसुखान्प्राप्य वर्षाग्रबिंदून्नामोक्ष्यंते त्वयि मधुकरश्रेणिदीर्घान्कटाक्षान् ३९ पश्चा

दुच्चैर्भुजतरुवनं मंडलेनाभिलीनः सांध्यं तेजो विकसितजपापुष्परक्तं दधानः नृत्यारंभे हर पशुपतेरार्द्रनागाजिनेच्छां शां

तोद्वेगस्तिमितनयनं दृष्टभक्तिर्भवान्या ४० गच्छंतीनां रमणवसतिं योषितां तत्र नक्तं रुद्धालोके नरपतिपथे सूचिभेद्यैस्तमोभिः

विद्युदेव कलत्रं यस्य सः कीदृशं भवनवलभीसुप्तपरिपतायां सुप्ताः पारापताः कलरवा यस्यां सा तां तिरोयमर्थः केन मंडलेन मंडलाकारेण त्वं किं कुर्वाणः

सांध्यं तेजो दधानः कीदृशं तेजः विकसितजपापुष्परक्तं विकसितजपाकुसुमारुणं पुनः कीदृशः त्वं शांतोद्वेगस्तिमितनयनं भवान्या ... दृष्टभ

क्तिः शांतो दूरीकृतः उद्वेगो मनोदुःखं तेन स्तिमिते निश्चलेन नयनेन यस्मिन्कर्मणि यथा स्यात्तथा शांतोद्वेगस्तिमितनयनं दृष्टा भक्तिर्यस्य स भक्तिः नाम

पूज्येष्वनुरागः ४० गच्छं· हे घन घन तत्र प्रासादे स्थितः सन् योषितां वनितानां उर्वीं दर्शय दर्शयेरित्यर्थः ७ कीदृशानां योषितां नक्तं रात्रौ रमणावसतिं

॥ निजपतिशयं ... सदने गच्छंतीनां यातीनां कायासौदा ॥६॥६॥

मिन्या विद्युता कस्मिन्सति नरपतिपथे राजमार्गे तमोभिरंधकारैः रुद्धालोके सति कीदृशौ कमौ तिः सूचिभिद्यैः सूच्याभिद्यते इति सूचिभेद्यानि तैः सांद्रै रित्यर्थः कीदृश्या सौदामिन्या कनकनिकषस्निग्धया कनकनिकषवत् शाणावत् चिक्कणा कनकः तयाहि जीमूतत्तोयोत्सर्गस्तनितमुखरो मास्मभूः माभू याः तोयोत्सर्गो वृष्टिः स्तनितं मेघगर्जितं तेन मुखरो वाचालः तोयोत्सर्गश्चासौ स्तनितमुखरश्च विशिष्टगर्जिताभ्यां तासां गमनस्याघातो न कर्तव्य इति यतः ताः भीरे चेत सो भीरवः शाणास्तु निकषः कषः इत्यमरः ४१ तामिति हे अंभोधर भवान्पुनरपि अध्वशेषं अवशिष्टमार्गं वाहयेत् अतिवाहयेत् क सति सूर्ये सति दृष्टे प्रातः समये सूर्ये दृष्टे तत्तो गच्छेरित्यर्थः किं कृत्वा तां रात्रिं कस्यांचित् भवनवलभौ कस्य चित्तु खलु निश्यातांसुप्तपारावतायां मित्रा णां

सौदामिन्या कनकनिकषस्निग्धया दर्शयोर्वीं तोयोत्सर्गस्तनितमुखरो मास्मभूर्विक्लवास्ताः ४१ तां कस्यांचिद्भवनवलभौ सुप्तपारावतायां नीत्वा रात्रिं चिरविलसनात्खिन्नविद्युत्कलत्रः दृष्टे सूर्ये पुनरपि भवान्वाहयेदध्वशेषं मंदायंते न खलु सुहृदामभ्युपेतार्थकृत्याः ४२ तस्मिन्काले नयनसलिलं योषितां खंडितानां शांतिं नेयं प्रणयिभिरतो वर्त्म भानोस्त्यजाशु प्रालेया

भ्युपेतार्थकृत्याः सुमंसो न मंदायंते अभ्युपेता अंगीकृता अर्थस्य प्रयोजनस्य कृत्या क्रिया यैस्ते अभ्युपेत सुप्तन कृत्याः इत्यर्थः न मंदायंते न विलंबंते नालस्यं भजंतीत्यर्थः ४२ तस्मिन्निति० तस्मिन्काले सूर्योदयसमये प्रणयिभिः प्राणनाथैः खंडितानां योषितां नयनसलिलं नेत्रबाष्पं शांतिं नेयं संतिनेतव्यं खंडिता लक्षणं निद्राकषायकलुषीकृत ताम्रनेत्रा नारीनखव्रणविशेषविचित्रितांगी यस्याः कुतोपि गृहमेति पतिः प्रभाते सा खंडितेति गदिता कविभिः पुराणैरिति १ अतो हेतोः भानोः वर्त्म मार्गं आशु शीघ्रं त्यज्य निवारय यतः सोपि सूर्यः खंडितायाः नलिन्याः कमलवदनात् प्रालेयाश्रु अवश्यायजलं हर्तुं मथनेतुं प्रत्यावृत्तः प्रत्यागतोस्ति अन्योपि भर्ता भर्तृरिजन्यमन्यत्रोषित्वायदा गृहमिति॥ ६॥ २॥

मे.का. तरावदनकमलादस्रुप्रमार्ष्टिनहृदयमपिकमिलीनीकमलमेवदनांतस्मात्मालेश्रंहरतीतिभावः यदित्वंनसाध्वीनेरोधतितदादिमः त्वयि

टी.म. विषये अनल्पाल्पसूर्यः अतिशयेनेर्ष्यालुः स्यादित्यर्थः किंभूतित्वयेकरस्द्धिकरान्किरणान् करागाद्धिइतिकररुधन्नस्मिन्करस्द्धिअनत्स्य

१० दिन करस्वरावरकोमास्तूरतिभावः ४३ गंभी० हेजीवनदतेनत्वंछायात्माप्रतिबिंबतयागंभीरायाः नामसरितःपयसिप्रवेसंलप्स्से प्राप्स्य

सिकीदृशेपयसिचेतसीनिर्मलेप्रसन्नेउदारनायकायालक्षणेतस्मात्कारणादस्याः गंभीरायाः चटुलशफरोद्वर्त्तनप्रेक्षितानिचटुला

निचंचलानिशीघ्राणिवाप्रामृलंलांमस्नानांउद्वर्त्तनानिउच्छलनानितान्येवप्रेक्षितानिअर्द्धधिलोकितानिचटुलशफरोद्वर्त्तनप्रेक्षणानिमो

कमलवदनात्सोपिहर्त्तुंनलिन्याः प्रत्यावृत्तस्त्वयिकररुधिस्यादनल्पाभ्यसूयः ४३ गंभीरायाःपयसि

सरितश्चेतसीवप्रसन्नेछायात्मापिप्रकृतिसुभगोलप्स्यसे तेप्रवेशंतस्मादस्याः कुमुदविशदान्यर्हसित्वं

नधैर्यान्मोघीकर्त्तुंचटुलशफरोद्वर्त्तनप्रेक्षितानि ४४ तस्याःकिंचित्करधृतमिवप्राप्तवानीरशाखंहृत्वानी

घीकर्त्तुंनार्हसिनयोग्योभवसिकस्मात्धैर्यात्धीरत्वलक्षणपुरुषगुणात्धाष्ट्यादितिकीदृशानिप्रेक्षणा ऽऽ लंसलिलवसनं

निकुमुदविर्मलानिःतस्याःगंभीरायाः विभ्रमान्सफलीकुर्याइत्यर्थः ४४ तस्या० हेसखेमित्रतेतवःप्रस्थानंगमनंकथमपिमहताकष्टेणभाविभ राम

विपतीतिनकीयांकुमुदविषदातिकिंकृत्वातस्याःकामिनीत्वेनीयान्नायाः गंभीरयाःसललवसनंहृत्वाअास्वाद्यकीदृशस्यतेतवपीतजभाराल्लंबमान १०

स्यजघनारूढस्येत्यर्थः कीदृशंनीलंस्वभावश्यामलंपुनः कीदृशंसलिल० तटतिकटवर्त्तिवेतसवृक्षशाखातांप्रांतसंश्लिष्टंलग्नंपुनःकीदृशं॥४५

मे·का· टी·म· २०

कान्तो येषां तेन तथा तैः सह हरितवेणुयत्ननीलच्छविमद्भिरित्यर्थः तादृतिकायां वासयष्टिं वो युष्माकं सुहृत्सखा नीलकंठो मयूरो अध्यास्ते दिवसविगमे सायंसमये संध्या
समये पर्यास्ते इत्यर्थः कीदृशो नीलकंठः मे मम कांतया तालैः करतलास्फालनपनवाद्यै नीर्तितः डवितः कीदृशैस्तालैः सिंजद्वलयसुभगैः सिंजंति शब्दायमा
नानि वलयानि कटकानि सिंजद्वलयानि तैः सुभगा मनोहराः सिंजद्वलयसुभगाः तैः अथवा सिंजावलयः सुभगैः सिंजा भूषणध्वनिः भूषणानां तु सिंजितमित्यमरः
सिंजाप्रधानानि वलयानि तैः सुभगाः तैस्तालैः करतल वादनैः सिंजि धातुर्यं तालव्यादिर्न तु दंत्यादिः उदात्तालंकारः तदुक्तं तदुदात्तं भवेद्यत्र समृद्धं वस्तु वर्ण्यते
इति ७९ हे साधो हे पुण्यसाधुः समर्थो निपुणो वेति कांति कायां एभिर्लक्षणैर्भिज्ञाभिः पूर्वोक्तैः मया दर्शितैः मम मंदिरं त्वं लक्षयेथाः जानीयाः कीदृशैर्लक्षणैः म
नसि निहितैः स्थितत्वं वक्ष्यापितैरविस्मृतैरित्यर्थः चः पुनः द्वारोपांते द्वारपार्श्वयोः शंखपद्मौ तः संखपद्मनामानौ निधानविशेषौ दृष्ट्वा कीदृशौ लिखितवपुषौ लि

तालैः शिंजद्वलयसुभगैर्नर्तितः कांतया मे यामध्यास्ते दिवसविगमे नीलकंठः सुहृद्वः ७९ एभिः साधो हृदयनिहितैर्लक्षणैर्लक्षयेथाः द्वारोपाते लि
खितवपुषौ शंखपद्मौ च दृष्ट्वा क्षामच्छायं भवनमधुना मद्वियोगेन नूनं सूर्यापाये न खलु कमलं पुष्यति स्वामभिख्यां ८० गत्वा सद्यः कल
भतनुतां शीघ्रसंपातहेतोः क्रीडाशैले प्रथमकथिते रम्यसानौ निषण्णः अर्हस्यंतर्भवनपतितां कर्तुमल्पाल्पभासं खद्योतालीविलसितनि

खितैर्वपुषी आकारो ययोस्तौ तथा चित्रस्थापिताकारौ हे घन अधुना तद्भवनं मद्वियोगेन नूनं निश्चयेन क्षामच्छायं वर्तते दृष्टा ॥भां विद्युदुन्मेषदृष्टिं ८१ ॥
मध्यविरहेण क्षीणशोभं वर्त्तते युक्तोयमर्थः खलु निश्चितं सूर्यापाये सूर्यापगमे सति रविविरहे कमलं स्वां स्वकीयामभिख्यां शोभां न पुष्यति न पुष्णाति न पोषयतीत्य
र्थः रविविरहि पद्मसिद्द गृहं पतिरहितं गृहमित्यर्थः ८० गत्वा हे पाथोद तत्र गत्वा सद्यस्तत्कालं कलभतनुतां कर्तुमर्हसि योग्यो भवसि सपदि कलभस्य करि
पोतस्य तनुरिव तनुर्यस्य भावः कलभतनुता तां अल्पशरीरत्वां कर्तुमर्हसि कस्मात् हेतोः शीघ्रसंपातहेतोः शीघ्रप्रवेशनार्थं हेतुप्रयोगे षष्ठी संपातः पतनं योगप्रयोगे
वेदसंविदोरिति शब्दार्णवे कीदृशस्त्वं प्रथमकथिते पूर्वोद्दिष्टे क्रीडाशैले निषण्णः सन् उपविष्टः कीदृशे क्रीडाशैले रम्यसानौ रम्याणि सानूनि यस्मिन् तथा शिखरे कीदृशीं अ

राम: २०

स्यभासंप्रकारगुणवचनस्येतिद्विरुक्तिः पुनः कीदृशीं विद्युदुन्मेषदृष्टिं विद्युदुन्मेषप्रकाशः स एव दृष्टिर्यस्याः तां विद्युदुन्मेषदृष्टिं यथा कश्चिद्विलोकयन् कु
चिदुन्नतप्रदेशे स्थित्वा स्थानैः २ अतितरां दूराद्दृष्टिं पातयति तद्वदित्यर्थः ८८ तन्वी० सं प्रति दृष्टिपातफलस्यातिज्ञानं श्लोकद्वयेनाह हे भ्रातो वा दृशा स्त्री मदा या द्वि
या कीदृशी तन्वी कृशांगी पुनः कीदृशी श्यामा यौवनमध्यस्था पुनः कीदृशी शिखरदशना पक्वदाडिमबीजाभमाणिक्यशिखरं बिंदुरिति तद्वद्दशना दंता यस्याः पुनः कीदृ
शी पक्वबिंबाधरोष्ठी पक्वं परिणतं यद्बिंबिकाफलं तद्वद् अधरोष्ठो यस्याः सा पुनः कीदृशी मध्ये क्षामा कृशोदरा पुनः कीदृशी चकितहरिणीप्रेक्षणा चकितहरिण्याः प्रेक्षण
चकितया हरिण्या चकितहरिण्यास्तस्याः प्रेक्षणानीव प्रेक्षणानि दृष्टयो यस्याः सा पुनः कीदृशी निम्ननाभिः गंभीरनाभिः पुनः कीदृशी श्रोणीभारादलसगरनाम गामिनी
तनुजघनत्वात् पुनः कीदृशी स्तोकनम्रा स्तनाभ्यां कुचाभ्यां स्तोकनम्रा स्तोकनम्रा ईषन्नम्रा या स्त्री हे मित्र तत्र स्यात् भवेत् कीदृशी धातुर्ब्रह्मणो युवतिविषये आद्या सृष्टि

तन्वी श्यामा शिखरदशना पक्वबिंबाधरोष्ठी मध्ये क्षामा चकितहरिणीप्रेक्षणा निम्ननाभिः श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यां
या तत्र स्याद्युवतिविषये सृष्टिराद्येव धातुः ८९ तां जानीथाः परिमितकथां जीवितं मे द्वितीयं दूरीभूते मयि सहचरे चक्रवाकीमिवैकां गाढो
त्कंठां गुरुषु दिवसेष्वेषु गच्छत्सु बालां जातां मन्ये तुहिनमथितां पद्मिनीं वान्यरूपां ९० ॥ रिव युवतयः सर्वविषये युवतीरधिकृत्येत्यर्थः धात्रा प्रथमं

निर्मिता युवतिरित्यर्थः अथवा शिखरं विद्यते यस्य स शिखरी शिखरिणो शिखरिणः कोटमंतो दशना यस्याः सा शिखरं शैलवृक्षाग्रे कक्षापुलिनकोटिष्विति विश्वः
शीते चैवोष्णगात्री स्यादुष्णे चैव सुशीतला प्रकृत्या सुकुमारांगी श्यामेति कथिता बुधैः २ अप्रसूता भवेत् सा सा श्यामा षोडशवर्षिकी श्यामा वश्यामवर्णा च श्यामा मधुरभाषि
णी ८९ तां जानीहि सुरत तत्र स्थितां भार्यां मम द्वितीयां जीवितं जानीयाः बुध्यस्व कीदृशीं तां परिमितकथां मितभाषिणीं कीदृशीं तां एकाकिनीं चक्रवाकीमिव कस्मिन् सति मयि
सहचरे भर्तरि दूरीभूते सति कीदृशीं तां गाढोत्कंठां अवलोत्कंठितां केषु सत्सु एषु दिवसेषु सत्सु भारवषोषु निदेनेषु अतिक्रामतिसु सत्सु अलस्तां बालां मन्ये
दापद्मिनीमिव जातां मन्ये वितर्कयामि कीदृशीं तां अन्यरूपां स्वरूपपरित्यागाद्रूपांतरमापन्नां कीदृशीं पद्मिनीं तुहिनमथितां तुषारदग्धां वा शब्दोत्र इवार्थोस्ति ९०

मे॰का॰ | टी॰म॰ | २१

युग्मं ॥ नूनं हे कंद नूनं निश्चितं तस्याः मम प्रियायाः मुखं दैन्यं दीनतां बिभर्ति कस्य इंदोरिव चंद्रस्य कीदृशस्येंदोः त्वदनुसारणक्लिष्टकांतेः त्वदनुसारेण त्वदुपरो
धेन त्वदावरणेनेति यावत् क्लिष्टा नष्टा कांतिर्यस्य स त्वदनुसरणक्लिष्टकांतिस्तस्य कीदृशं मुखं प्रबलरुदितोच्छूननेत्रं प्रबलमविच्छिन्नं यद्रुदितं रोदनं तेनोच्छूनेस्य
युटेश्वयथुयुक्ते बहुबाष्पमोचनादुत्पटिते लोचने यस्मिन् तत्तथा पुनः कीदृशं निश्वासानां अशिशिरतया भिन्नवर्णाधरोष्ठं निश्वासानामंतस्तापोद्भवेन भि
न्नवर्णो विच्छायोऽधरोष्ठो यस्य तत् पुनः कीदृशं मुखं हस्तन्यस्तं हस्ते स्थापितमनेन विरहचिंताव्यंजके पुनः कीदृशं असकलव्यक्ति असकला असंपूर्णा व्यक्तिराका
रो यस्य तत् कस्मात् लंबालकत्वात् संस्काराभावाल्लंबमानकुंतलत्वात् केशानामग्रथितत्वाद्वक्राकारमित्यर्थः २१ आलो॰ हे नीरमुक् सा मम महिला ते
तव आलोके दृष्टिपथे पुरा निपतति निपतिष्यति दृष्टिपथं यास्यतीत्यर्थः पुरानिपातसंयोगभविष्यदर्थे वर्तमाना भवति किंभूता सा बलिव्याकुला बलिं देवतादिपू

नूनं तस्याः प्रबलरुदितोच्छूननेत्रं प्रियायाः निश्वासानामशिशिरतया भिन्नवर्णाधरोष्ठं हस्तन्यस्तं मुखमसकलव्यक्तिलंबालकत्वा
दिंदोर्दैन्यं त्वदनुसरणक्लिष्टकांतेर्बिभर्ति २१ आलोके ते निपतति पुरा सा बलिव्याकुला वा मत्सादृश्यं विरहतनु वा भावगम्यं लिखंती
पृच्छंती वा मधुरवचनां सारिकां पंजरस्थां कच्चिद्भर्तुः स्मरसि रसिके त्वं हि तस्य प्रियेति २२ उत्संगे वा मलिनवसने सौम्य निक्षिप्य वीणां म
द्गोत्रांकं विरचितपदं गेयमुद्गातुकामा ॥ जाततत्र व्याकुला अन्यचिंता वाथ वा मत्सादृश्यं मदाकारं भावगम्यं चित्रलिखितं फलकादौ विन्यस्यंती लि
खंती कीदृशं भावगम्यं विरहतनु कलत्रवियोगेन कृशांगं दुर्बलं अथवा पंजरस्थे सारिकां मधुरवचनां मंजुभाषिणीं पृच्छंती वदंतीति किं कथयति कोमला
मंत्रणे हे रसिके शृंगारवति त्वं भर्तुः स्वामिनः स्मरसि हि यतो तस्य भर्तुः त्वं प्रियाभीष्टा वाताद्देविकल्पे वेत्यमरः २२ हे सौम्य साधो पुनः कीदृशी मद्गोत्रांकं मत्ना
मांकितां गेयं गीतं प्रबंधादि उद्गातुकामा उच्चैर्गातुकामोऽभिलाषो यस्याः सा उद्गातुकामा गेयं गातुमिच्छा वर्तते किं कृत्वा उत्संगे क्रोडे वीणां निक्षिप्य निवे
श्य कीदृश्ये उत्संगे मलिनवसने मलिनवाससीत्यर्थः कीदृशं गेयं विरचितपदं यद्वंधो रागेण यस्य तत् पुनः सा किं कुर्वंती भूयो२ वारं२ मूर्छनां विस्मरंती कीदृशी

रामः | २१

मूर्छनां स्वयमात्मना कृतामपि किं कृत्वा कथंचित्तंत्रीं वीणां सारयित्वा सज्जीकृत्य कीदृशीं तंत्रीं नयनसलिलैः आर्द्रां क्लिन्नां स्वराणां स्थापनां वैचित्त्याद्विस्मरंतीत्य
र्थः षडमध्यमनामानौ ग्रामौ गायंति मानुषाः न तु गंधारनामानं स लभ्यो देवयोनिभिः २३ शेषानिति हे साधो सा कीदृशी सती तव दृष्टिपथे पतिष्यतीति संबंधः किं कु
र्वती गमनदिवसस्थापितस्यावध्येः शेषान् मासान् गणनया एकद्वित्रिः संख्यया संपद्यते न भूत्वा भूतले इति न्यस्यंती स्थापयंती कैः देहलीमुक्तपुष्पैः देहली गृहाणां वा गृह
एवां मुक्तानि स्थापितानि पुष्पाणि देहलीमुक्तपुष्पाणि तैः गृहावग्रहिणी देहली स्मरः देहलीद्वारशाखाः द्वारदारप्रदेसस्तत्र तेन स्तकुसुमैरित्यर्थः देवतापूजार्थैः
स्थापितदेहलीपुष्पैर्मासान वसिष्टान् गणयंतीत्यर्थः गमनदिवसादारभ्य स्थापितो गमनदिवसस्थापितस्तस्य पुनः सा किं कुर्वती वा च वा संयोगं मम संगमं स्वाद
यंती अभिलषंती कीदृशं योगं हृदयनिहितारंभं हृदये मनसि निहितः संकल्पितः आरंभ उपक्रमो यस्य स तं अथवा हृदयनिहिता आलिंगनचुंबनप्रणयवचनादि

तंत्रीमार्द्रां नयनसलिलैः सारयित्वा कथंचिद्भूयो भूयः स्वयमपि कृतां मूर्छनां विस्मरंती २३ शेषान् मासान् गमनदिवसस्थापितस्याव
धेर्वा विन्यस्यंती भुवि गणनया देहलीमुक्तपुष्पैः संयोगं वा हृदयनिहितारंभमास्वादयंती प्रायेणैवं रमणविरहेष्वंगनानां विनोदाः
२४ आधिक्षामां विरहशयने सन्निषण्णैकपार्श्वां प्राचीमूले तनुरिव कलामात्रशेषां हिमांशोः नीता रात्रिः क्षण इव मया सार्द्धमिच्छारतैर्या
तामेवोष्णैर्विरहजनितैरश्रुभिर्यापयंती २५ ॥ सोव्यापारायत्किं नूस्तथानां संभोगो अनुभवती तव दृष्टिपथे पतिष्यतीति संबंधः युक्तोयमर्थः प्राये
ण बाहुल्येन भूस्त्रीगनानां स्त्रीणां रमणविरहेषु पतिवियोगेषु विनोदाः कालयापनोपाया भवंति एतेन संकल्पावस्था उक्ता तदुक्तं संकल्पो नाम विषयमनोरथ
उदाहृतइति २४ आधि॰ पुनः सा किं कुर्वती तां रात्रिं उष्णैरिवाश्रुभिर्यापयंती रोदनबाष्पजलैः उष्णैरेव रात्रिं क्षेपयंती तामिति कां या रात्रिर्मया सार्द्धं इच्छारतैर्यथा
कामितसंभोगैः क्षणमिव क्षणमात्रमिव नाना निर्गमिता कीदृशी सा आधिक्षामा आधिना मनोव्यथया क्षामा क्षीणांगी पुनः कीदृशी विरहशयने सन्निषण्णैकपार्श्वा
पल्लवादिरचिते स्तरे सन्निषण्णमेकं पार्श्वं यस्याः सा परिवर्तितुमसमर्था सा सांगत्वात् सा का इव हिमांशोः चंद्रस्य तनुरिव मूर्तिरिव प्राचीमूले पूर्वस्याः दिशो मूले उदय।

मे·का·
टी·म·
२२

पाअवनिशिष्टाः यस्याः कीदृशैरश्रुभिर्विरहजनितैः वियोगसमुत्पन्नैः प्राचीमहर्गणं सीमावस्थायोतनार्थं ९५ ॥ निश्वा॰ पुनः सा कीदृशी निश्वासेन नूतं निश्वतं अख
कं केशं विक्षिपंती चालयंती कीदृशेन निश्वासेन अधरकिसलयक्लेशिना अधरपल्लवक्लेशदायिना पुनः कीदृशं शुद्धस्नानात्परुषं कठोरं न लमात्रादभिषेका
त् रूक्षतरं कीदृशं पुनः एलकं आगमलवि आसमंतात् गंडयोर्लंबमानं तद्वत्येवं संपन्नदा गंडलंबिकपोलप्रान्ति पुनः साकं कुर्वंती इति हेतोः निद्रं आकांक्षंती
वांछंती कीदृशीं निद्रां नयनसलिलोत्पीडरुद्धावकाशां नयनसलिलोत्पीडनेत्रांबुपूरेणाऽवरुद्धोऽवकाशः प्रकाशो यस्याः सा ताः इति निकांक्षनलच्छेदा-
पि त्वन्नप्राप्तापि मत्संयोगः समसमेलायकं सुखं भुयन्येन उत्पादयेत् ९६ पादा॰ हे सौम्य पुनः सा किं कुर्वंती स्वेदान् काष्ठान् चक्षुः नेत्रं पक्ष्मभिः नेत्रलोमभिः

निश्वासेनाधरकिसलयक्लेशिना विक्षिपंती शुद्धस्नानात्परुषमलकं नूनमागंडलंबिं मत्संयोगः सुखमुपनयेत् स्वप्नजोपीति
निद्रामाकांक्षंतीं नयनसलिलोत्पीडरुद्धावकाशां ९६ पादानिंदोरमृतशिशिरान् जालमार्गप्रविष्टान् पूर्वप्रीत्या गतमभिमु
खं सन्निवृत्तं तथैव खेदाच्चक्षुः सलिलगुरुभिः पक्ष्मभिः छादयंती साभ्रेन्हीव स्थलकमलिनीं न प्रबुद्धां न सुप्तां ९७ आद्ये ब-
ध्वा विरहदिवसे या शिखा दाम हित्वा शापस्यांते विगलितशुचा तां मयोद्वेष्टनीया ॥

छादयंती कीदृशैः पक्ष्मभिः सलिलगुरुभिरश्रुदरेः की
दृशं चक्षुः इंदोश्चंद्रस्य पादान् किरणान् पूर्वप्रीत्या पूर्वस्नेहेनाभिमुखं गतं पुनः सन्निवृत्तं प्रत्यावृत्तं विरहाद्व्याघुटितं कीदृशान् पादान् जालमार्गप्रवि
ष्टान् वनायनमार्गे जालिकारंध्रादौ कृतप्रवेशान् कीदृशान् पादान् अमृतवच्छिशिरान् पीयूषशीतलान् सा का इव स्थलकमलिनी इव यथा साभ्रे मेघघटाछ
दितेऽह्नि अहनि दिवसे स्थलकमलिनी प्रबुधा न सुप्ता न विकसनानसंकुचिता ९७ आद्ये॰ पुनः सा किं कुर्वंती करेण हस्तेन एकं केशपाशं आकृष्य द्वारं वारं सा
रयंती सजायंती कीदृशीं एकवेणीं गंडाभोगात् कठिनविषमां कपोलविस्तारात् कठोरविषमां तां शिखिकायां वेणीं मया आद्ये विरहदिवसे बध्वा किं कृत्वा दामपु
ष्पमालं हित्वा प्रथमविरहादिवसे शिखा मया बद्धा शिखा सा शिखा शापसंबंध्यंते मया उद्वेष्टनीया उत्कालनीया मोचनीया सा किं वदंती एकाध्वा सो वेणी।

रामः
२२

चएकवेणीं करेण हस्तेन सारयंतीं कीदृशीं स्पर्शक्लिष्टां स्पर्शे सति मूलवालेषु सत्यथो पुनः कीदृशीं विषमकठिनां कठिना वासो विषमा च कठिनविषमा तां। कीदृशेन करेण
अयमितनखेन अयमिता लून क्रियासंस्कारवर्जिता नखा यस्य स तथा तेन तां द्रक्ष्यसीति संबंधः ९८ कुलकं सा सं॰ हे घन सा अबला दुर्बला त्वामपि अस्रं बाष्पं अवश्यं मो
चयिष्यति सा किं कीदृशी सा पेशलं सुकुमारं गात्रं धारयंती असकृत् मुहुः दुःखदुःखेन दुःखप्रकारेण धारयंती प्रकारगुणवचनस्येति द्विर्भावः पेशलं वा मृदुलं गात्रं वदंतीत्यर्थः की
दृशं गात्रं शय्योत्संगे निहितां स्थापितां कीदृशं अस्रं नवजलमयं नवं बाष्परूपं पुनः कीदृशं गात्रं संन्यस्ताभरणं त्यक्तं गात्रत्वात् परित्यक्तभूषणं युक्तोयमर्थः प्रायः प्रायेण
इंगितज्ञः सर्वोपि जनः करुणावृत्तिर्भवति करुणामयी वृत्तिः करुणावृत्तिर्यस्य स करुणावृत्तिः आर्द्रो द्रवीभूतोऽन्तरात्मा यस्य सः ९९ जाने॰ हे सखे हे भ्रातः अहमेवं
जाने तव सख्याः भवतीभार्यायाः मनश्चित्तं मयि विषये संभृतस्नेहं प्रचुरप्रेमयुक्तं विद्युते अतः अस्मात् कारणात् इत्थंभूतां इदृग्विधं वर्णितः स्वरूपामवस्थां प्राप्तां प्रथमवि

स्पर्शक्लिष्टामयमितनखेनासकृत्सारयंतीं गंडाभोगात्कठिनविषमामेकवेणीं करेण ९८ आदिकुलकं सा संन्यस्ताभरणमबला पेशलं धा
रयंती शय्योत्संगे निहितमसकृद्दुःखदुःखेन गात्रं त्वामप्यस्रं नवजलमयं मोचयिष्यत्यवश्यं प्रायः सर्वो भवति करुणावृत्तिरार्द्रांतरात्मा ९९
जानेसख्यास्तवमयिमनःसंभृतस्नेहमस्मा दित्थंभूतां प्रथमविरहे तामहं तर्कयामि वाचालं मां न खलु सुभगंमन्यभावः करोति प्रत्यक्षं ते नि
खिलमचिराद्भ्रातरुक्तं मया यत् १०० सव्यापारामहनि न तथा पीडयेन्मद्वियोगः शंके रात्रौ गुरुतरशुचं निर्विनोदां सखीं ते॥ रहे॰ हं तर्कयामि

विचारयामि खलु निश्चितं मां सुभगमात्मानं मन्यते सुभगंमन्यः सुभगंमन्यभावः सुभगमानित्वं मां वाचालं बहुभाषिणं न करोति किंचित्प्रलापिनं न
विधत्ते यतस्मात् हे भ्रातः यदुक्तं मया तत्सर्वं यत्स्वरूपासोक्तं तन्निखिलं समस्तं ते तव प्रत्यक्षं भविष्यतीति शेषः द्वित्रैः दिनैः तां द्रक्ष्यसीत्यर्थः १०० सव्या॰ हे भ्रातः तु त्यहं शंके
वितर्कयामि इति किं मद्वियोगः यथा रात्रौ ते तव वयस्यं प्रति पीडयेत् पीडां कुर्यात् तथा अहनि दिवसे न पीडयेत् कीदृशीं तां ते वयस्यां सव्यापारां सह व्यापारेण सह वीजनेन नन्मेकर्म
निर्माणलक्षणेन वर्तते या ता सव्यापारा तां पुनः कीदृशीं गुरुतरशुचं गरिष्ठशोकं न कं निद्राभावात् पुनः कीदृशीं निर्विनोदां विनोदरहितां हे मेघ तां साध्वीं एकपत्नीं पति

मे·का·
टी·म·
२३

श्यां तां निशीथे अर्द्धरात्रौ पश्य विलोकय किमर्थं मत्संदेशैः मनसाभिज्ञानवाक्यैः रलमत्यर्थं सुखयितुं सुखप्रवृत्तये पश्येत्यर्थः कीदृशीं तां उन्निद्रां विगतनिद्रां कीदृशीं
त्वं अवनिशयनां सन्नवातायनस्थः अवनिर्मही तत्र शयनं अवनि शयनं तस्मादासन्नो योऽसौ वातायनो गवाक्षस्तत्र तिष्ठतीति तथा ११ रुद्धा० हे वारिद अहमिति सं
के इतीति किं मृगाक्ष्या मद्भार्यायाः नयनं वामनयनं मीनक्षोभात् चलकुवलयश्रीतुलां एष्यति प्राप्स्यति मीनस्य क्षोभः मीनचलनात् चलस्य कुवलयस्य याश्रीः शोभा तया शो
भया तुलां सादृश्यं गमिष्यतीति शंके कस्मिन्नवसरे यस्मिन्नासन्ने निकटवर्तिनि सति कीदृशं नयनं अलकैः रुद्धापांगप्रसरं रुद्धो अपांगयोर्नेत्रप्रान्तयोः प्रसरः कटाक्षःक्षे
पो यस्य तत् पुनः कीदृशं अंजनस्नेहशून्यं शोकात् कज्जलस्नेहेन शून्यं मलवैः केशैः रुद्धापांगप्रसरं च पुनः कीदृशं नयनं मधुनो मद्यस्य प्रत्यादेशात् अपरित्यागा
त् विस्मृतभ्रूविलासो यस्य तत् विस्मृतभ्रूकटाक्षविक्षेपाटोपं मदिराराहित्यागात् पुनः कीदृशं नयनं उपरिस्पंदि उपरउपरिष्टात् स्पंदते स्फुरतीति उपरिस्पंदि यदुक्तं

मत्संदेशैः सुखयितुमलं पश्य साध्वीं निशीथे तामुन्निद्रामवनिशयनां सन्नवातायनस्थः ११ रुद्धापांगप्रसरमलकैरंजनस्नेहशून्यं प्रत्यादेशा
दपि च मधुनो विस्मृतभ्रूविलासं त्वय्यासन्ने नयनमुपरिस्पंदि शंके मृगाक्ष्या मीनक्षोभाच्चलकुवलयश्रीतुलामेष्यतीति १२ वामश्चास्याः कररु
हपदैर्मुच्यमानो मदीयैर्मुक्ताजालं चिरपरिचितं त्याजितो दैवगत्या संभोगान्ते मम समुचितो हस्तसंवाहनानां यास्यत्यूरुः सरसकदलीस्तंभगौ

वामभागस्थः नारीणां पुंसां च दक्षिणः स्पंदानुभूतिश्च त्रलाभं ललाटे पदमुत्तमां १२ वाम० च पुनः अस्याः मत्प्रेयस्याः वामकुरुः चलत्वं या ((रश्चलत्वं १३ ॥
स्यति स्फुरिष्यति कीदृशो वामः कुरुः मदीयैः कररुहपदैः नखपदव्रणैः प्रमुच्यमानः परिहीयमाणो नखांकरहित इत्यर्थः पुनः कीदृशः ऊरुः चिरपरिचितं चिराभ्यस्तं मुक्ताजा
लं मौक्तिकसरमयं कटिभूषणं दैवस्य भागस्य वशेन त्याजितो मोचितो दुष्टदुःकृतकर्मणा भरणरहितः इत्यर्थः पुनः कीदृशः संभोगान्ते सुरतप्रान्ते मम हस्तसंवाहनानां ह
स्तविश्रामणानां करमर्दनानां समुचितो योग्यः पुनः सरसः आर्द्रः लोयोऽसौ कदलीस्तंभः सरसकदलीस्तंभः सद्वगौरपांडुरः गौराकारे सिद्धार्थे प्रलेपीनहरणापि गौरसायाः

रामः
२३

तस्मिन्० हेजलदतस्मिन्कालेप्रभातसमयेयदिसासीमंतेनीलब्धनिद्रासुखास्यात्लब्धं निद्रायाःसुखंययासालब्धनिद्रासुखास्त्तदामम्मंदिराम्यर्णे आसानोनिषिण्णः
सन्त्वंयाममात्रंप्रहरमात्रंसहस्वस्यव्यालव्येषांवलात्कारेणनांमाजागरयेथाः किमर्थमित्याह अस्याः प्रियायाःसद्यः कंठच्युतभुजलताग्रंथिगाढोपगूढंमाभूत्सद्यस्त
त्कालंकंठनिगरणाच्च्युताभ्रष्टापतिताभुजलतातस्याःग्रंथिर्यस्मिन्गाढोपगूढेदृढालिंगनेततृतस्याःअश्लेषप्रत्यूहीमाभवत्वित्यर्थः कस्मिन्सतिमयिप्रणयिनिक
थंचिन्महताकष्टेनस्वप्नलब्धेसतिस्वप्नेलब्धोयःसस्वप्नलब्धः तस्मिन्प्रणयःस्नेहोविद्यतेयस्यसप्रणयीतस्मिन्प्रणयिनिस्वप्नप्राप्तेभर्त्तरिसतितस्याःसंभोगोयोगसुखं
स्यात्तदर्थंस्तनितध्वनिर्नकर्त्तव्यः॥इतिभावः॥ तामु०॥हेधीरपंडितधियाबुध्याराजतेइतिधीरस्तस्यसंबोधनंहेधीरत्वंमानिनींवालांस्तनितवचनैर्घनगर्जितैर्वचनैरेववक्तुं

तस्मिन्कालेजलदयदिसालब्धनिद्रासुखास्यात् तन्वाशीनःस्तनितविमुखोयाममात्रंसहस्वमाभूदस्याःप्रणयिनिमयिस्वप्नलब्धेकथंचि
त्सद्यःकंठच्युतभुजलताग्रंथिगाढोपगूढं४ तामुत्थाप्यस्वजलकणिकाशीतलेनानिलेन प्रत्याश्वस्तांसममभिनवैर्जालकैर्मालतीनां वि
द्युद्गर्भैस्तिमितनयनांत्वत्सनाथेगवाक्षे वक्तुंधीरस्तनितवचनैर्मानिनींप्रक्रमेथाः५ भर्त्तुर्मित्रंप्रियमविधवेविद्धिमामंबुवाहं तत्संदेशैर्मनसि
निहितैरागतंत्वत्समीपं योवृंदानित्वरयतिपथिश्राम्यतांप्रोषितानां ॥ प्रक्रमेथाः वक्तुमुद्यमंकुर्याः किंकृत्वापश्चात्अनिलेनपवनेनउत्थाप्यजा
गरूकांकृत्वाकीदृशेनानिलेनस्वजलकणिकाशीतलेनस्वस्ययज्जालंतस्यकणिकाजलकणपटलीभूयाशीतलस्तथाः तेनकीदृशींतमालतीनांज्ञातानांजालकैर्मुकु
लैरभिनवैर्नूतनैःसमंसहितं प्रत्याश्वस्थंप्रबुद्धंवनिद्रंमालत्यपिप्रभातेविकसतितस्मात्तामपुनःकीदृशींतं त्वत्सनाथेगवाक्षेस्तिमितनयनांयुष्मदाश्रितेवातायने
निश्चलनयनांकीदृशेगवाक्षेविद्युद्गर्भैर्विद्युत्काल्कारसारेतडिद्युक्तेइत्यर्थःयोयोरःपटलदर्शनार्थेगवाक्षप्रहितप्रेक्षणइत्यर्थः५ भर्त्तु०॥हेअविधवेहेसौभाग्य
वतिसारमणित्वंमांमत्यंबुवाहंविद्धिजानीहिकादृशंमांभर्त्तुःपत्युःमित्रंप्रियमभीष्टांपुनःकीदृशंत्वत्समीपंतवसन्निधौआगतंप्राप्तंकैःत्वत्संदेशैःतवप्रियादिष्टि
वाचिकैःकीदृशैःमनसिनिहितैःमानसंस्थापितैःयोयनाथनःप्रोषितानांविदेशावर्त्तितानांवृंदानिसमूहान्त्वरयतिशीघ्रंकंठानिकुरुतेकीदृशानांप्रोषितानांपथि

मार्गे अत्यंतांश्रि(?)श्रामं कुर्वतां कैर्मंद्रस्निग्धैः गांभीरध्वनसिर्मेघनादैः कीदृशानिः वृंदानि अबलावेणिमोक्षोत्सुकानि विरहहिणीबालावेणीपाशमोचनाय सोत्सुकानि
सादराणीत्यर्थः ६ इत्या॰ हे सौम्य तदनंतरं सा मत्कांता उन्मुखी उर्द्धमुखी सती त्वां वीक्ष्य दृष्ट्वा च पुनरेवं संभाव्य मन्प्रियस्य हृतोयमिति विचार्य अस्मादर्शनं संभाषणा
त्परं तदनंतरं सा त्वयुक्तं अवहिता सावधाना सती श्रोष्यत्याकर्णयिष्यति कस्मिन् सति त्वया इत्याख्याते कथिते सति कीदृशी सा उत्कंठोच्छ्वसितहृदया उत्कंठ
या हर्षोत्कर्षेण रेण संजातरोमांचितं वक्षःस्थलं सा काइव मैथिली सीता इव यथा सीता पवनतनयं वीक्ष्य संभाव्य च पुत्कंठोच्छ्वसितहृदया सती रामोदंतमाकर्णयवती
हे सौम्य सीमंतिनीनां कांतोदंतः पतिकुशलवृत्तिसमाचारः संगमात् मेलापकात् किंचिन्न्यूनः एवकुं नोहीनः कीदृशः कांतोदंतः सुहृदुपनीतः सुहृदा मित्रेण उपनीतः प्रा
पितः उपनीतः कांतानां कांतसमाचारः कांतसंगमः कुल्य एवेति भावः ७ तामा॰ हे आयुष्मन् च पुनः मम वचनात् मामकीनवाक्यात् तां रमणीमेवं ब्रूयात् एवं

मंद्रस्निग्धैर्ध्वनिभिरबलावेणिमोक्षोत्सुकानि ६ इत्याख्याते पवनतनयं मैथिलीवोन्मुखी सा त्वामुत्कंठोच्छ्वसितहृदया वीक्ष्य संभा
व्य चैवं श्रोष्यत्यस्मात्परमवहिता सौम्य सीमंतिनीनां कांतोदंतः सुहृदुपनीतः संगमात्किंचिदूनः ७ तामायुष्मन्मम च वचनादात्मनः
चोपकर्तुं ब्रूयादेवं तव सहचरो रामगिर्याश्रमस्थः अव्यापन्नः कुशलमबले पृच्छति त्वां वियुक्तः पूर्वाभाष्यं सुलभविपदां प्राणि
नामेतदेव ८ अंगेनांगं प्रतनु तनुना गाढतप्तेन तप्तं ॥ वक्ष्यमाणं च पुनः आत्मनात्वयमुपकर्तुं त्वं उपकार्येसी निहेतोः सम्यग्वदेरित्यर्थः किं
निगदितेरित्याह हे अबले तव सहचरो भर्त्ता त्वं प्रति मन्मुखेन कुशलं पृच्छति कीदृशः रामगिर्याश्रमस्थः चित्रकूटपर्वतस्थः कुशलं पृच्छतीत्यर्थः पुनः कीदृशः
अव्यापन्नः सकुशलः कीदृशीं वियुक्तां वियोगयुक्तां युक्तोयमर्थः सुलभविपदां प्राणिनां एतदेव पूर्वाभाष्यं वर्त्तते सुलभाविपत् येषां ते सुलभविपदस्तेषां शीघ्र
तरापतितानां जीवानां पूर्वभाष्यं पूर्वमेवाभाष्यते यत् तत्पूर्वाभाष्यं कुशलवार्त्ता पृच्छनमेतदेव वाच्यं अतस्तेन कुशलं पृष्टं ८ पुनः प्राह अंगे॰ हे अबले तव दूर
वर्त्ती दूरमार्गस्थो भर्त्ता तैः संकल्पैरंगेन अंगं विशति उत्कंठा च सा दंगेन त्वा रीरेण तवांगं विशति भवितादेहं प्रविशितुमिच्छति त्वया सममेकत्वं इच्छतीत्यर्थः कीदृ

रामः
२५

श्यामंगमतनुद्धवलंकीदृशेनअंगेन गाढतमेनप्रकर्षेणप्रततेनप्रकर्षेणाप्रततेनकीदृशंप्रांतं पुनः कीदृशेनसाश्रेणसवाष्पेनकीदृशमंगअश्रुद्रवं अश्रुद्र
हश्रुतं पुनः कीदृशंअंगंअविरतोत्कंठेन विरताउत्कंठायस्मात् तत्कीदृशेनांगेनउत्कंठतेन पुनः कीदृशमंगंउच्छ्वासं पुनः कीदृशेन समधिकरोच्छ्वासिना अधिको
च्छ्वाससहितेनकीदृशोभवती विधिना रुद्धमार्गः रुद्धो मार्गो यस्य स रुद्धमार्गः कीदृशेनविधिना वैरिणा वैरयुक्तेन ९ त्वद्वा० हे अबले मत्तेतव जन्मनि मन्मुखेनेदं प्राहत्वं त्वत्या
दृ कीदृशमिदं उत्कंठा विरचितं पदं उत्कंठया विरचितानि पदानि यस्मिन् कर्मणि तत् इदं वक्ष्यमाणं कीदृशं श्रवणविषयमतिक्रांतः श्रवणगोचरं व्यतिक्रांतः पु
नः कीदृशः सलोचनाभ्यामदृश्यलोचनाभ्यामतिक्रांतः सांप्रतं दूरे स्थितत्वात् सदुक्तिकः यत्तवः मत्तोकिलेति तस्य यत् त्वद्वाक्यं यन्मया हे राक्षायते उक्तीयते यत् तत्त्व

साम्येणाश्रुद्रवमविरतोत्कंठमुत्कंठितेन उच्छ्वासं समधिकतरोच्छ्वासिना दूरवर्ती तं कल्येतेविधाति विधिना वैरिणा रुद्धमार्गः ९ त्वद्वा-
क्यं यत्परमपि किलतैर्यः सखीनां पुरस्तात् कर्णे लोलः कथयितुमभूदाननस्पर्शलोभात् सोऽतिक्रांतः श्रवणविषयं लोचनाभ्यामदृश्यस्त्वामु-
त्कंठाविरचितपदं मन्मुखेनेदमाह १० श्यामालंगं चकितहरिणीप्रेक्षणे दृष्टिपातान् वक्त्रच्छायं शशिनि शिखिनां बर्हभारेषु केशान् उ-
त्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासान् हंतैकस्थं क्वचिदपि न ते चंडि सादृश्यमस्ति ११ || त्वद्वाक्यं यत्सखीनां पुरस्तादपि कर्णे क-
थयितुं लोलं चपलोः अभूत् कस्मात् आननस्पर्शात् मुखचुंबनलोभात् यस्तेन वसहचरोन्मदागदेतिष्ठन् सखीनां पुरतोपि रहस्यवाक्यं नोक्तवान् तव कर्णे सुपस्त-
त्य कथितवान् तदुक्तं मन्मुखेन आह इत्यर्थः अहमपि तव स्मरणस्य श्लाघनीयोस्मीति मदुक्तं श्रोतव्यमिति भावः १० श्यामा० हे तन्वि कृशांगी इदं निद्रुतिपदे तेन वसादृश्यं क्व-
चिदपि वर्तमस्तु ति एकस्मिन् तिष्ठतीति एकस्थं सर्वेनाप्युक्तित वस्तुत्वं तदेवाह लतांगात्रारीरं श्यामासु फलिनीषु उत्पश्यामि श्यामाः वनसालिनीषु नारीषु श्यामास्तस्या-
मि चकिता त्रस्ता भयविह्वला हरिणी तस्याः प्रेक्षितमवलोकनं तस्मिन् तव दृष्टिपातान् नयनकटाक्षप्रक्षेपान् उत्पश्यामि शशिनि चंद्रे तव वक्त्रच्छायामाननशोभां मु-
त्पश्यामि शिखिनां मयूराणां बर्हभारेषु चंद्रककलापेषु तव केशान् केशपाशान् उत्पश्यामि नदीवीचिषु सरित्कल्लोलेषु तव भ्रूविलासान् नेत्रभ्रूविभ्रमान् उत्पश्यामि कीदृशे

मे·का·
टी·म·
४४

भित्वा॰ हेगुणवतिनेतुषाराद्रिवाताः हिमाचलपवनास्तेमयाइतिहेतोः आलिंग्यंतेउपश्लिष्यंते नेकेयः वातादक्षिणेनप्रवृत्ताः दक्षिणेयांसमागताउत्तरादिन्नः त्वा
कान्तातस्मैताइत्यर्थः किंकृत्वासद्यस्तत्कालंदेवदारुद्रुमाणांकिशलयपुटान्भित्वासरलतरूणांनवकिसलयमुकुलानिविदार्यकीदृशायेतत्क्षीरस्रुतिसुरभयः
तेषांदेवदारुद्रुमाणांक्षीरस्रुतिदुग्धप्रस्रवणंतयासुरभयःसुगंधिनःइतिकिंकिलेतिसंभाव्यतेयदितवांगमेभिर्मरुद्भिः पूर्वंस्पृष्टंभवेत् तवांगेलग्नित्वायदिममांगेलग्नं
मिनदामेममसुखायभवेयुःरितिहेतुनावातामयालिंग्यंतेइत्यर्थः ४२ त्वामा॰ हेगुणवतियावत्तेनवचरणपतितमात्मानंकर्तुमहमिच्छामिसाचयितुंवाञ्छांयामितावन्मेममदृष्टिः
लोचनमस्त्रैबाष्पैरापूर्यतेमुहुर्वारंवारंलाप्यतेकीदृशैरस्रैःउपचितैर्मुक्ताफलस्थूलैः किंकृत्वाशिलायांपाषाणेधातुरागैर्हिंगुलहरितालादिभिर्वर्णैःत्वमालिख्य मंडयि॰

भित्वासद्यः किशलयपुटान्देवदारुद्रुमाणां येतत्क्षीरस्रुतिसुरभयोदक्षिणेनप्रवृत्ताः आलिंग्यंतेगुणवतिमयातेतुषाराद्रिवाताः पूर्वंस्पृ
ष्टंयदिकिलभवेदंगमेभिस्तवेति ४२ त्वामालिख्यप्रणयकुपितांधातुरागैःशिलाया मात्मानंतेचरणपतितंयावदिच्छामिकर्तुं अस्रैस्तावन्मु
हुरुपचितैर्दृष्टिरापूर्यतेमे क्रूरस्तस्मिन्नपिनसहतेसंगमंनौकृतांतः ४३ धारासिक्तस्थलसुरभिणस्त्वन्मुखस्यास्यबाले दूरीभूतंप्रतनुमपिमां
पंचबाणःक्षिणोतिघर्मांतेऽस्मिन्विगणयकथंवासराणिव्रजेयुर्दिक्संसक्तप्रविततघनव्यस्तसूर्यातपानि ४४ ॥ त्वांतवचित्ररूपंकृत्वाकीदृ

शींत्वांप्रणयकुपितांसुरतकलहकृतक्रोधांयुक्तोयमर्थःहेमुग्धेक्रूरोदुष्टःकृतांतोविधातादेवरूपःतस्मिन्नपिचित्रस्वरूपेनौआवयोः संगमंमेलापकंनसहतेसंयो
गंनविषहते ४३ धारा॰ हेबालेपंचबाणःकंदर्पोमांप्रतनुमपिकृशांगमपिक्षिणोतिपीडयतिपुनः किंभूतंमाअस्यत्वन्मुखस्यदूराद्भूतांएतदृशंनसहदूरस्थायि
नांकीदृशस्यत्वन्मुखस्यधारासिक्तस्थलसुरभिणःधाराभिःजलधाराभिःसिक्तंयत्स्थलंतद्वत्सुरभिनस्यनामिनःस्वेदइतिनुमागमः धारासिक्तस्थलसुरभिणहेबा
लेत्वमेवविगणयविचारयःमेममवासराणिःदिनानिअस्मिन्घर्मांतेवर्षाकालेकथंव्रजेयुःकथंयातिकीदृशानिवासराणिदिक्संसक्तप्रविरलघनव्यस्तसूर्यातपा
निदिक्षुसंसक्ताःलग्नाःप्रविरलाःयेघनाःमेघास्तैर्व्यस्ताःदूरीकृताःसूर्यातपायेषु तानितथादिक्प्रांतलग्नघननिवारितःरविप्रकाशानिवासराणीतिनपुंसकत्वं४४

रामः
४५

संक्षि० हेबालेत्रियामाः रात्रयः क्षणमिव कथंमयासंक्षिप्तेअतिवाह्यंतेकीदृश्यः त्रियामाः दीर्घयामाः दीर्घप्रहाराः हेबालेसर्वावस्थासुप्रधानप्रभातसंध्यामध्यान्हे
षुमंदमंदातपंकस्मात् मंदोमंदप्रकारः आतपोयस्मिन् तत् एतादृशमहर्दिनमपि कथंभवेत् कोर्थः वासरेमहांस्तापो रात्रयोदीर्घया॥ भावंतेतेहेचटुलनयनैःचप
लनेत्रेइत्थंपूर्वोक्तप्रकारेणैत्वद्वियोगव्यथाभिःमेममचेतःअशरणंकृतंतवविरहपीडाभिर्ममनःशरणरहितंकृतं कीदृशंचेतःदुर्लभंप्रार्थनांदुर्लभोदुःप्राप्यो प्रार्थनो
मनोभिलाषीयस्यतत् कीदृशीभिः त्वद्वियोग व्यथाभिःगाढोष्मभिःगाढमतिशयेन उष्मस्तापो यासुतागाढोष्माभिः ४५ इत्यं०॥ हेकृततनुइतिपूर्वोक्तप्रकारेणाह
मात्मानाएववल्लभावेनैव आत्मान शरीरं अवलंबेधारयामि समाश्वासयामीत्यर्थः अहंकिंकुर्वन् बहुवेगणन् बहुविचारयन् हेकल्याण हेभद्रेत्वमपि सुतरामत्यर्थं।

संक्षिप्यंतेक्षणमिवकथंदीर्घयामास्त्रियामाः सर्वावस्थास्वहरपिकथंमंदमंदातपंस्यात् इत्थंचेतः चटुलनयनेदुर्लभप्रार्थनंमे गाढो
ष्माभिः कृतमशरणंत्वद्वियोगव्यथाभिः ४५ इत्यात्मानंबहुविगणयन्नात्मनानावलंबेतत्कल्याणित्वमपिसुतरांमागमः कातरत्वंक।
स्यात्यंतंसुखमुपगतंदुःखमेकांततोवा नीचैर्गच्छत्युपरिचदशाचक्रनेमिक्रमेण ४६ शापांतोमेभुजगशयनादुत्थितेशार्ङ्गपाणौशे
षान्मासान्गमयचतुरोलोचनेमीलयित्वापश्चावावांविरहगुणितंतंतमात्माभिलाषं ॥ कातरत्वंक्लीवत्वंमागमः मागच्छेःसाहसंकुर्याइत्य
र्थः हेकल्याणि अत्यंतंनिरंतरंकस्यसुखंउपनमंप्राप्तंवर्त्तेतेकस्यवा एकांततोदुःखंसमागतं अपितुनकस्यापियुक्तोयमर्थः हेकल्याणिदशाकर्मदशाचक्रनेमिक्र
मेण नीचैर्गच्छतिचपुनःकदाचिदुपरिगच्छतिरथधारणतिष्ठंतिननीचैरुपरिवागच्छेत् कर्मदशायाअनिश्चितत्वात् ४६ मामा० हेबालेस्थलीदेवतानांतरुकि
शलयेषु अश्रुलेशाःपतंतिखलुनिश्चयेनबहुसोबहून्वारान् नपतंति अपितुपतंत्येवद्वौनसौप्रकृत्यर्थेगमयितः कीदृशानांस्थलीदेवतानांमापश्यतीनांनेत्र
वनिर्दयाश्लेषहेतोः निर्दयंदयावर्जितंयथास्यात्तथायःआश्लेषः आलिंगनंतस्यहेतुःनिर्दयाश्लेषहेतुस्तस्मात् कीदृशंमांआकाशप्रणिहितभुजं आकाशेप्रणिहि
तौस्थापितौभुजौबाहूयेनसतथाकीदृश्यास्तेनवकथमपिमहतायत्नेनमयास्वप्नसंदर्शनेषुलब्धया स्वप्नेयानिसंदर्शनानितेषुस्वप्नसंदर्शनेषुकीदृशाःअश्रुण

मे॰ का॰ टी॰ म॰ २६

लेशाः अम्बुलेशाः मुक्तास्थूलाः मौक्तिकस्थूलबिंदवः तरूणां किसलयापल्लवाग्रलग्नकिसलयानि तेषु पुनः किसलयेषु ९८ त्वा पांतो॰ हे अबले मम त्वा पांतो भवि-
ष्यति कृतसंनिभुजगशयनात् शेषनागशय्यायाः शार्ङ्गपाणौ श्रीकृष्णे उत्थिते सति तदा त्वापावत्वा तां भविष्यति इति वक्तुरोमासान् त्वं गयानि बाहु थ किं कृत्वा लोचने
मीलयित्वा नेत्रे संमील्य पश्चात् रावांतमात्माभिलाषविरहगुणितामद चंद्रचंद्रिकाधवलितासु निशासु विरहेन गुणितो द्विगुणात्रिगुणाचतुर्गुणितो विरहगुणित
संतं वेतन्विंतिताभिलाषं पश्चात् रावांभोसावहे अनिर्वाच्यस्वरूपं भोगानुभवनं करिष्याव इत्यर्थः ९८ सुप्त॰ हे सुभ्रु मच भर्त्ता पुनर्ध्रुयोप्याह त्वं सत्येन त्वा मत्यां मेम
म कंठलग्ना सती पुरा पूर्वं निद्रां गत्वा किमपि सत्वरं रुदती विप्रबुद्धा निद्रां कृत्वा किमपि लोकमात्रं वदंतीति जागरिता मम संपेयात् सहसा छिन्ना इत्यर्थः असद्गद

निर्देश्याव: परिणतत्वा रत्वं द्रिकामुक्षपासु ९७ मामाकात्वामरणाहितभुजं निर्दयाश्लेषहेतो तेथ्वामालेकथमपिमयास्वप्नसंदर्शनेपि पर्यं
तीनां न खलु बहुशो नस्थलीदेवतानां मुक्तास्थूलाः तरुकिसलयेषु अश्रुलेशाः पतंति ९८ भूयश्चाह त्वमपि शयने कंठलग्ना पुरा मे निद्रां ग
त्वा किमपि रुदती सत्वरं विप्रबुद्धा सांतर्हासं कथितमसकृत् पृच्छतश्च त्वया मे दृष्टस्वप्नः कितव रमयन् कामपि त्वं मयेति ९९ कश्चित्सौम्य
व्यवसितमिदं बंधुकृत्यं त्वया मे प्रत्याख्यातुं न खलु भवतो धीरतां तर्कयामि निःशब्दोपि प्रदिशसि जलं याचितश्चातकेभ्यः प्रत्युक्तं हि प्रणयिषु सतामी

र्ं॰ च पुनः पृच्छतः सतः मे मम त्वया इति कथितं गदितं हसतीति किं हे कितव धूर्त मायावस्त्र कामप्यनिर्दिष्टनामधेयां रमणीं ॥ प्सितार्थक्रियैव
रमयन् क्रीडां कुर्वाणो दृष्टः अतो हेतोः सांतर्हासं लज्जाः इत्यति ज्ञानपूर्वकं वाक्यमुदितं ९९ कश्चिदिति॥ कश्चिदतिकोमलामंत्रणे हे सौम्य मे मम त्वया इदं बं
धुकृत्यं व्यवसितं हे सौम्याह मिदं मन्ये त्वया मम महिलायाः संदेशप्रापणलक्षणं कार्यमंगीकृतं मे चास्ति परं खलु निश्चितं भवनस्त्व प्रत्यादेशात् निराकरणा
त् तिरस्कारात् धारयती धीरतां न कल्पयामि धीरत्वं न तर्कयामि हि जलहरं चातकेभ्यो याचतः सतः निःशब्दोपि शब्दवर्जितोपि जलं प्रदिशसि ददासि हि यस्मा
त् कारणात् प्रत्युक्तोयमर्थः सतां सज्जनानां प्रणयिषु स्नेहवत्सु ईप्सितार्थ क्रियाएव प्रत्युक्तं स्यात् कामितार्थकार्यसंपादनमिष्टिरेव प्रत्युत्तरं प्रतिवचो भवति सतः

आत्मा० ॥ हे साधो त्वमा सुन्दरीं प्रति कैलासात् शैलान्निवृत्तः प्रत्यावृत्तः सन् ममापि जीवनं धारयेथाः के तद्वचोभिः तस्याः मम प्रेयस्याः वचांसि तैस्तद्वचोभिः तद्वचनैः
कृत्वा कीदृशं जीवितं प्रातः कुंदप्रसववत् शिथिलं प्रातःसमये कुंदस्य प्रसवः पुष्पं तद्वत् शिथिलं अदृढमूलं कीदृशैर्वचोभिः साभिज्ञानप्रहितकुशलैः साभिज्ञानं
गृहसंकेतसहितं प्रहितं स्थापितं कुशलं क्षेमं वार्ता येषु तानि साभिज्ञानप्रहितकुशलानि तैः तथा किं कृत्वा तां सखीं मद्वल्लभां एवं पूर्वोक्तवाक्यैराश्वास्य आ
श्वासनं दत्वा कीदृशीं तां प्रथमविरहे गाढदुःखः उत्कटः शोको यस्याः सा प्रथमविरहोदग्रशोकां देवयोनित्वात् पूर्वं विरहाभावः कीदृशात् शैलात् त्रिनयनवृषोत्खा
तकूटात् त्रिनयनस्य महेश्वरस्य वृषो बलीवर्दस्तेनोत्खातानि शृंगाग्रेणोन्मथितानि कूटानि तटनिकटशिखराणि येन स्थानस्मात् ३१ ॥ एत० असितेऽञ्जनाभिन
आश्वास्यैवं प्रथमविरहोदग्रशोकां सखीं तां शैलादाशु त्रिनयनवृषोत्खातकूटान्निवृत्तः साभिज्ञानप्रहितकुशलैस्तद्वचोभिर्ममापि
प्रातः कुंदप्रसवशिथिलं जीवितं धारयेथाः ३१ एतस्मान्मां कुशलिनमभिज्ञानदानाद्विदित्वा मा कौलीनादसितनयने मय्यविश्वासिनी भूः
स्नेहानाहुः किमपि विरहे ध्वंसिनस्ते त्वभोगादिष्टे वस्तुन्युपचितरसाः प्रेमराशीभवंति ३२ एतत्कृत्वा प्रियमनुचितप्रार्थनावर्त्तिनो मे सौ
हार्दाद्वा विधुर इति वा मय्यनुक्रोशबुद्ध्या ॥ यने यस्याः सा असितनयना तस्याः संबोधनं हे असितनयने कौलीनात् जनापवादात् मयि विषये माऽवि
श्वासिनी भूः मा भव अविश्वासिनी किं कृत्वा मां कुशलिनं विदित्वा मा जीवंतं ज्ञात्वा कस्मात् एतस्मात् अभिज्ञानदानात् एतः मच्छिततं संकेतात् मत्वचनं देशालेख्यात्
कश्चित् कथयिष्यति दूरस्थे भर्तरि स्नेहहानिः स्यात् तन्नाह पंडिताः विरहे विरहावस्थायां स्नेहान् प्रीतिं किमपि लीकमात्रं ध्वंसिनः प्राहुः सर्वथा न हीनान् हि यस्मात्
कारणात् स्नेहाः इष्टे वस्तुनि उपचितरसास्ते तः प्रेमराशीभवंति इष्टे कलत्रादौ वस्तुनि उपचितः प्रमोदः व्यापारः सौ येषां ते उपचितरसाः पुष्टरसा येषां ते अप्रे
मराशयः प्रेमराशयो भवंतीति प्रेमराशीभवंति कस्मात् अभोगात् अभुक्तत्वात् ३२ एत० ॥ हे जलधर तदनुनष्टं दृष्टान् देशान् यथेष्टं गच्छेः किं कृत्वा मम प्रि
यमभीष्टमेतत् कृत्वा एतत् प्रियां तां देसर्पणलक्षणं कार्यं विधाय कीदृशस्य मे मम अनुचितप्रार्थनावर्त्तिनः अनुचिता दुःप्राप्ययाचना तस्यां वर्त्तते इत्येवंशी

मे·का·
टी·म·
२७

लं: अनुचितमार्थनावर्त्तीनस्य कस्मात् बाष्पवासो हार्द्रात् मेध्यात् अथ चामयि इत्यनुक्तोसवुध्याकाह एष चेतनया दूतीति किं अयं विधुरः कष्टवानिदयाधिया अ
नेन परमकारुणिकमयत् प्रतिपादतं कीदृशं त्वं प्रावृषा संभृतश्रीः प्रावृषाकालेन संहृतापुष्टिं प्राप्ता श्रीर्लक्ष्मीयस्य संभृतश्रीसो अंभोद एवं कृते सति तेन त्वविद्युता
सह क्षणमपि च पुनः विप्रयोगो वियोगो माभूत् मम कार्यं कृत्वानंतरं इष्टान् देशान् गच्छेत्यर्थः २३ अस्मा० ततोऽनंतरं पयोद: पाथोद: कामरूपी इच्छारूपधारक त्वं हे
हिन्याः सकलं संभ्रमम वदत् किं कृत्वा तस्मादद्रेः तस्माच्चित्रकूटात् पर्वतात् तूर्णं शीघ्रमलकायां नगर्यां: सत्वं प्राप्य केन निगदित यथा यक्षेण निर्दिष्टमार्गेण पुनः किं
कृत्वा यक्षागारं यक्षसदनं दृष्टिचिह्नैः कथितचिह्नैः विदित्वा ज्ञात्वा ज्ञात्वा कीदृशं यक्षागारं विगलितप्रभं विगलिता विभा यस्मिन् तत् विगलितशोभं शोभारहितं
यत्सदिष्टं गुह्यकेन तत्सकलमवदत् यक्षेणोक्तं सकलं कथितवान् कस्मात् प्रयत्नात् अविस्मृतत्वेन यद्यक्षेणोक्तं तत्सर्वं प्रयत्नात् सावधानात् प्रोक्तवान् कीदृ

इष्टान् देशान् जलद विचर प्रावृषा संभृत श्रीर्माभूदेवं क्षणमपि च ते विद्युता विप्रयोगः २३ अस्मादद्रेर्निगदितपथात्तूर्णमेत्या
लकायां यक्षागारं विगलितविभं दृष्टचिह्नैर्विदित्वा यत्संदिष्टं प्रणयमधुरं गुह्यकेन प्रयत्नात्तद्गेहिन्याः सकलमवदत् कामरूपी पयो
दः २४ तं संदेशं जलधरवरो दिव्यवाचा चचक्षे प्राणांस्तस्या जनहितरतो रक्षितुं यक्षवध्वाः प्राप्योदंतं प्रमुदितमना सापि तस्थौ स्व
भर्तुः केषां न स्यादभिमतफला प्रार्थना ह्युत्तमेषु २५ श्रुत्वा वार्त्तां जलदकथितां तां धनेशोपि सद्यः।

शं संदिष्टं प्रणयमधुरं प्रणयेन स्नेहेन मधुरं हृद्यं प्रणयमधुरं २४ तं संदेशमिति जलधरवरो मेघश्रेष्ठः तं संदेशं गुह्यकेन यत्संदिष्टं तं दिव्यवाचा देवतागि
रा: यक्षवध्वाः देवांगनायाः आचचक्षे प्रोवाच किं कर्तुं तस्या यक्षांगनायाः प्राणान् रक्षितुं यक्षप्राणरक्षणार्थं कीदृशो जलधरवरः जनहितरतः जनानां लो
कानां हिते वांछति नेरतः आसक्तो जनहितः रतः सापि गुह्यकप्रमदा स्वस्य भर्त्तास्वभर्त्ता तस्य स्वभर्तुः उदंतं समाचारं प्राप्य समासाद्य प्रमुदितमना प्रकृष्टमानसा
सतीतस्थौ स्थितवती युक्तोयमर्थः हि यस्मात् कारणात् उत्तमेषु प्रधानपुरुषेषु प्रार्थना केषां पुरुषाणां अभिमतफला न स्यात् अपि तु सर्वेषामभिमतफलाम नोभीष्टफ

चित्तमना सन्कुसुमसमालागीतरांगरंगभामिनीभोगान् आप्नत् निरंतरं प्रापयामास किंकृत्वा संयोज्य संयोजना कारयित्वा एकत्र मेलयित्वा यक्षयक्षिणौ इत्यर्थः पुनः
किंकृत्वा तां जलदकथितां वार्त्तां श्रुत्वा मेघकथितां प्रवृत्तिं समाकर्ण्य पुनः किंकृत्वा सद्यस्तत्कालं शापस्य अंतं अविसानं संविधाय कृत्वा शापस्यांतं विधायेत्यर्थः किं
भूतो धनदः सदयहृदयः सहृदयया वर्त्तते हृदयं यस्य स इति सदयहृदयः दयासहितहृदयः पुनः कीदृशः अस्तकोपः अस्तो गतो निराकृ
कोपो येन सः अस्तकोपः कीदृशौ दंपती विगलतशुचौ अपगतः शोको पुनः कीदृशौ दंपती हृष्टचित्तौ हर्षितमानसौ कीदृशान् भोगान् इष्टान् मनोभीष्टान्
पुनः कीदृशान् भोगान् अभिमतसुखान् अभिमतान् सुखान् ॥ अभिमतानि सुखानि येषां ते अभिमतसुखास्तान् अभिमतसुखान् तौ दंपती संयोगयुतौ संज
तौ विपुलकुतूहलैः कमलाकलितौ बभूवतुरित्यर्थः २६ इत्थंभूतं ॥ कालिदासो महाकविर्मेघदूताभिधानं काव्यं चकार कृतवान् इत्थंभूतं अमुना प्रकारेण भूतं

शापस्यांतं सदयहृदयः संविधायास्तकोपः संयोज्यैतौ विगलितशुचौ दंपती हृष्टचित्तौ भोगानिष्टानविरतसुखान् भोजयामास शश्वत्
२६ इत्थंभूतं सुचरितमतं मेघदूतं च नाम्ना कामक्रीडाविरहितजने विप्रयुक्ते विनोदः मेघस्यास्मिन्नतिनिपुणता बुद्धिभावे कवीनां नत्वा
र्यायाः चरणकमलं कालिदासः चकार २७ इति श्रीकालिदासकृतं मेघदूतकाव्यं संपूर्णमिति ॥ शुभं ॥ संजातं काव्यालंकारेणान्वितां पुनः कीदृ

शं सुचरितमतं सुष्ठु शोभनं चरितमाचारो येषां ते सुचरिताः पंडिताः तेषां मतं तासमतं च पुनः अस्मिन् काव्ये कामसमत्यर्थं कामक्रीडाविरहितजने विप्रयोगे मतिविनो
दो विद्युते पुनः अस्मिन् काव्ये कवीनां बुद्धिभावे अतिनिपुणता अतिनैपुण्यं वर्त्तते किंकृत्वा आर्यायाः पार्वत्याः चरणः कमलं नत्वा ॥ नमस्कृत्य विनोदमात्रेण काव्य
रचनां रचयामासेत्यर्थः २७ इति श्रीमेघदूतकाव्यावचूर्णिः अथ प्रशस्तिः ॥ श्रीमच्छ्रीजिनचंद्रसूरिगुरवो भूवन्प्रतिष्ठाश्रयः तेषां मतिपदस्मणीर्गणिगुणाने
त्रांवुजाह्वो भवत् तच्छिष्यो जयमंदिरो गणवरो भूतस्य शिष्येणा वै काव्यस्यास्य समर्थितार्थनिचयः श्रीमेघदूतस्य सन् कनक[illegible]णा विदधात्यसं[illegible]थितमर्थमर्थं
विनाशकं जलधराभिधदूतसमुद्रं निजधियासुधियामपि [illegible]नां २ इतिप्रशस्तिः [illegible]र्यो चंद्रमसौ यावत् यावत्मेरुकुलाचलाः [illegible]तराल[illegible]जयतु[illegible]

